# योगिनीतन्त्रम्।

०६३८

पण्डितकुलपतिना

वि, ए, उपाधिधारिणा

वानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च।

द्वितीयसंस्करणम्।






कलिकातानगरे

कलिकाता य[illegible]

मुद्रितम्।

[illegible]न्द

[illegible] १८९७।

# योगिनीतन्त्रम्।

## प्रथमः पटलः।

ॐ नमो महाभैरवाय।

कैलासशिखरारूढ़ं शङ्करं परमेश्वरम्।
पप्रच्छ गिरिजाकान्तं पार्वती वृषभध्वजम्॥
श्रीदेव्युवाच। भगवन्! सर्वधर्मज्ञ! सर्वज्ञानमय! प्रभो!।
सूचितं योगिनीतन्त्रं तन्मे वद जगद्गुरो!॥
माहात्म्यं कीर्त्तितं तस्य पुरा श्रीशैलमन्दिरे।
वाराणस्यां कामरूपे नेपाले मन्दराचले॥
ईश्वर उवाच। शृणु देवि! प्रवक्ष्यामि योगिनीतन्त्रमुत्तमम्।
पावनं परमं धन्यं मोक्षैकफलदायकम्॥
गोपितव्यं प्रयत्नेन मम त्वं प्राणवल्लभे!।
यथान्यो लभते नैवं तथा कुरु प्रियंवदे!॥
एतत्तन्त्रं वरारोहे! सुरासुरसुदुर्लभम्।
काङ्क्षन्ति देवताः सर्वाः श्रोतुं तन्त्रमनुत्तमम्॥
यक्षाद्याः परमेशानि! न तेभ्यः कथितं मया।
कथयामि तव स्नेहात् बद्धोऽहं परमं त्वया॥
विद्युत्कान्तिसमानाभदन्तपंक्तिबलाकिनीम्।
प्रावृट्सम्भूतसुस्निग्धनवमेघसमद्युतिम्॥
मुण्डमालावलीरम्यां मुक्तकेशीं दि[illegible]राम्।
लोलजिह्वां घोररावामारक्तलोचनत्रयाम्॥

कोटिकोटिकलानाथविगलन्मुखमण्डलाम् ।
अमाकलासमुल्लासकिरीटोज्ज्वलमण्डलाम् ॥
शवद्वयकर्णभूषां नानामणिविभूषिताम् ।
सूर्य्यकान्तेन्दुकान्तौघप्रोल्लसत्कर्णभूषणाम् ॥
मृतहस्तसहस्रैस्तु कृतकाञ्चीं हसन्मुखाम् ।
सृक्कद्वयगलद्रक्तधाराविस्फुरिताननाम् ॥
खड्गमुण्डवराभीतिसंशोभितचतुर्भुजाम् ।
दन्तुरां परमां नित्यां रक्तमण्डितविग्रहाम् ॥
शिवप्रेतसमारूढ़ां महाकालोपरिस्थिताम् ।
वामपादं शवहृदि दक्षिणे लोकलाञ्छितम् ॥
कोटिसूर्य्यप्रतीकाशं समस्तभुवनोज्ज्वलम् ।
विद्युत्पुञ्जसमानाभज्वलज्जटविराजितम् ॥
रजताद्रिसमं देवं स्फटिकाचलविग्रहम् ।
दिगम्बरं महाघोरं चन्द्रार्कपरिमण्डितम् ॥
नानालङ्कारभूषाढ्यं भास्वत्स्वर्णतनुरुहम् ।
योगनिद्राधरं शम्भुं स्मेराननसरोरुहम् ॥
विपरीतरतासक्तां महाकालेन सन्ततम् ।
अशेषब्रह्माण्डभाण्डप्रकाशितमहोज्ज्वलम् ॥
शिवाभिर्घोररावाभिर्वेष्टितां प्रलयोदिताम् ।
कोटिकोटिशरच्चन्द्रन्यक्कृतानखमण्डलाम् ॥
क्षुधापूर्णशीर्षहस्तयोगिनीभिर्विराजिताम् ।
आरक्तमुखमद्याभिर्मत्ताभिरन्वितां तथा ॥
घोररूपैर्महानादैश्चण्डतापैश्च भैरवैः ।
गृहीतशवकङ्कालजयशब्दपरायणैः ॥
नृत्यद्भिर्वाद[illegible]निशम्भु दिगम्बरैः ।
श्मशानालयमध्यस्थां ब्रह्माद्युपनिषेविताम् ॥

अधुना शृणु देवेशि ! तन्त्रराजं सुदुर्लभम् ।
कथयामि तव स्नेहात् न प्रकाश्यं कथञ्चन ॥
अतीव स्नेहबद्धेन भक्त्या दासोऽस्मि ते प्रिये ! ।
गुरुमूलमिदं शास्त्रं गुरुमूलमिदं जगत् ॥
गुरुरेव परं ब्रह्म गुरुरेव शिवः स्वयम् ।
गुरुर्यस्य वशीभूतो देवास्तं प्रणमन्ति च ॥
अपि व्याधिगलत्पादप्रक्षालनजलं यदि ।
पिबेदमृतभावेन यः स देवीपुरं व्रजेत् ॥
सुरां यद्यप्यसंस्कारां गुर्वनुज्ञाविधः पिबेत् ।
प्रायश्चित्तं न तत्रापि वेदेऽपि स्थित एव हि ।
अपि तन्त्रविरुद्धं वा गुरुणा कथ्यते यदि ।
अथवा स्वमतं वेदैर्महारुद्रवचो यथा ॥
सर्वं गुर्वाज्ञया कार्य्यं तत्त्वस्यागमनं विना ।
अद्वैतं देवतैश्वर्य्यं नाद्वैतं गुरुणा सह ॥
नाद्वैतं भवते कार्य्यं न ममास्तीह भुवने ।
गुरुर्गतिर्गुरुर्देवो गुरुर्देवो तथा प्रिये ! ॥
स्वर्गलोके मर्त्यलोके नागलोके च वर्त्तते ।
अल्पज्ञोऽनल्पविज्ञो वा गुरुरेव सदागतिः ॥
गुरुवद्गुरुपुत्रेषु गुरुवत्तत्सुतादिषु ।
गुरुपत्नी महेशानि ! गुरुरेव न संशयः ॥
गुरोरुच्छिष्टवत् प्रिये ! तत्सुतोच्छिष्टमेव च ।
भोजनीयं न सन्देहो विकारश्चेदधोगतिः ॥
गुरूच्छिष्टं महादेवि ! ब्रह्मादीनां सुदुर्लभम् ।
गुरूच्छिष्टं तथा प्रोक्तं महापूतं परात् परम् ॥
गुरुणा गुरुपत्न्या वा गुरुपुत्रेण वा प्रिये ! ।
भुक्तान्नं मुष्टिमात्रं वा योऽश्नीयाद्वर्षविंशति ॥

चिरजीवी जरारोगविमुक्तोऽन्ते शिवो भवेत् ॥
गुर्वन्तिके यदि वसेत् पञ्चाशद्वर्षमुत्तमे ! ॥
भैरवाचारसम्पन्नस्तत्पादपरिचारकः ।
इह भुक्त्वा वरान् भोगान् अन्ते देवीगणो भवेत् ॥
रूपयौवनसम्पन्नैः रुद्रकन्यागणैः सह ।
असौ विहरति वीरो यावच्चन्द्रार्कतारकम् ॥
प्रातरुत्थाय यो मर्त्त्यो गुरौ दण्डनतिं चरेत् ।
तत्सुतं तत्तनयां वा प्रणमेद्विधिपूर्वकम् ॥
स सिध्यति वरारोहे ! नात्र कार्य्या विचारणा ।
यत्राशायां गुरोः स्थानं नित्यं प्रातश्च तन्मुखः ॥
गुरुं तद्दयितापुत्रपुत्रीरुद्दिश्य मानवः ।
प्रणमेद्भक्तिसंयुक्तः स सिद्धो नात्र संशयः ॥
गुरोः स्थानं हि कैलासं गृहं चिन्तामणेर्गृहम् ।
वृक्षाली कल्पवृक्षाली लता कल्पलता स्मृता ॥
जलखातञ्च सर्वं हि गङ्गातुल्यं प्रकीर्त्तितम् ।
गुरुगेहे स्थिता दास्यो भैरव्यः परिकीर्त्तिताः ॥
भृत्यान् भैरवरूपांश्च भावयेत् मतिमान् सदा ।
प्रदक्षिणं कृतं येन गुरोः स्थानं महेश्वरि ! ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
श्रीदेव्युवाच। गुरुः को वा महादेव ! वद मे करुणामय ! ।
तत्त्वोऽप्यधिक एवायं गुरुस्त्वया प्रकीर्त्तितः ॥
ईश्वर उवाच। आदिनाथो महादेवि ! महाकालो हि यः स्मृतः ।
गुरुः स एव देवेशि ! सर्वमन्त्रेऽधुना परः ॥
शैवे शाक्ते वैष्णवे च गाणपत्ये तथैन्दवे ।
महाशैवे च [illegible] च स गुरुर्नात्र संशयः ॥
मन्त्रवक्ता स एव स्यात् नापरः परमेश्वरि ! ॥

मन्त्रप्रदानकाले हि मानुषे नगनन्दिनि ! ॥
अधिष्ठानं भवेत्तत्र महाकालस्य शङ्करि ! ।
अतस्तु गुरुता देवि ! मानुषे नात्र संशयः ॥
मन्त्रदाता शिवः पद्मे यज्ज्ञानं कुरुते गुरोः ।
तज्ज्ञानं कुरुते देवि ! शिष्योऽपि शीर्षपङ्कजे ॥
अतएव महेशानि ! एक एव गुरुः स्मृतः ।
अधिष्ठानं भवेत्तस्य मानुषस्य महेश्वरि ! ॥
माहात्म्यं कीर्त्तितं तस्य सर्वशास्त्रेषु शङ्करि ! ।
विशेषं मनु वक्ष्यामि माहात्म्यं गुरुगोचरम् ॥
पशुमन्त्रप्रदाने तु मर्य्यादा दश पौरुषी ।
वीरमन्त्रप्रदाने तु पञ्चविंशति पौरुषी ॥
महाविद्यासु सर्वासु पञ्चाशत् पौरुषी मता ।
ब्रह्मयोगप्रदाने तु मर्य्यादा दश पौरुषी ॥
ब्रह्मयोगो महादेवि ! भेरुण्डायां प्रकीर्त्तितः ।
गुरुपादोदकं पुण्यं सर्वतीर्थावगाहनम् ॥
सर्वतीर्थावगाहे तु यत् फलं प्राप्नुयान्नरः ।
तत्फलं प्राप्नुयान्मर्त्त्यो गुरुपादकणाजलात् ॥
स स्नातः सर्वतीर्थेषु योऽभिषेकं समाचरेत् ।
पीतं पूतञ्च कुरुते सर्वपापेभ्य एव हि ।
विशेषतो महामाये ! तत्क्षणाच्छिवतां व्रजेत् ।
गुरोः पादरजो मूर्द्ध्नि धारयेद् यस्तु मानवः ॥
सर्वपापविनिर्मुक्तः स शिवो नात्र संशयः ।
तेनैव रजसा देवि ! तिलकं यस्तु कारयेत् ॥
चतुर्भुजो न सन्देहः स वैकुण्ठपतिर्भवेत् ।
तद्रजो भक्षते येन एकस्मिन् दिवसेऽपि च ॥
कोटिमहायज्ञफलं लभते स न संशयः ।

इति ते कथितं देवि ! रहस्यं गुरुगोचरम् ।
गोपनीयं प्रयत्नेन स्वकीयं कुलपौरुषम् ॥

इति श्रीयोगिनीतन्त्रे सर्वतन्त्रोत्तमोत्तमे देवीश्वरसंवादे चतुर्विंशतिसाहस्रे
प्रथमः पटलः ।

---

## द्वितीयपटलः ।

श्रीदेव्युवाच । परमानन्दसन्दोह ! चराचरजगद्गुरो ! ।
श्रुतं ते गुरुमाहात्म्यं गुह्याद् गुह्यतरं हि यत् ।
मयाद्य श्रोतुमिच्छामि कालीं सकलतारिणीम् ।
कथिता सा महाविद्या सिद्धविद्या च यामले ॥
महामहाब्रह्मविद्या चामुण्डा तन्त्रगोचरे ।
आज्ञापय महादेव ! रहस्यं कृपया शिव ! ॥
ईश्वर उवाच । महामहाब्रह्मविद्या विद्येयं कालिका मता ।
यामासाद्य च निर्वाणमुक्तिमेति नराधमः ॥
अस्या उपासकाश्चैव ब्रह्मविष्णुशिवादयः ।
रहस्यं कथ्यते देवि ! सर्वलोका उपासकाः ॥
कालिकायाः प्रसादेन सर्वे मुक्त्यादिभागिनः ।
सा कालिनां सहस्राणि जप्यानाञ्च हि कोटिशः ॥
तेषां भाग्यवशेनापि कालिसाधनतत्परः ।
काली च जगतां माता सर्वशास्त्रेषु निश्चिता ॥
कालीमन्त्रं जपेद् यो हि कालिपुत्रो न संशयः ।
त्यजसि त्वं परश्चैतत् पुमांसं परमं तथा ॥
सदृशत्वं कचित्काले त्यजसि त्वं जगन्मयि ! ।
कालिविद्यां समासाद्य न त्यजति कदाचन ॥
गतं शूद्रस्य शूद्रत्वं ब्राह्मणानाञ्च विप्रता ।
मन्त्रग्रहणमात्रे तु सर्वे [illegible]समाः किल ॥

नगरी निर्वाणाख्या गङ्गां प्राप्य यथैव ताः ।
कालीमन्त्रग्रहादेव सर्वे शिवसमाः किल ॥
अपि चेत् त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत् ।
तस्यैव जननी धन्या पिता तस्य सुरोत्तमः ॥
तस्यैव पितरः स्वर्गं यान्ति यस्मात् सुदुर्लभम् ।
येन भाग्यवशाद्देवि ! काली सा वा समाश्रिता ॥
आशंसन्ति हि पितरो नराणां पुण्यकर्मणाम् ।
कदास्माकं कुले पुत्रः कालीमन्त्रमुपाश्रयेत् ॥
तदा मुक्तिपुरीं प्राप्य विरराम सदैव हि ।
काली तारा तथा छिन्ना गुरुश्च भूपतिस्तथा ॥
एकत्वेन च बोद्धव्यं भिन्नत्वे नरकं व्रजेत् ।
ताराशिष्यस्त्यजेत् कालीं कालीशिष्यस्तु तारिणीम् ॥
छिन्नमहिषमर्दिन्याः कदाचित् पूजनं स्मृतम् ।
यदि वा पूज्यते देवि ! नान्यद्दै न प्रपूजयेत् ॥
कालीत्वेन च संभाव्य अन्यत्र पूजयेत् शिवे ! ।
या काली परमा विद्या सैव तारा न संशयः ॥
एतयोर्भेदभावेन नानामन्त्रा भवन्ति हि ।
उक्तं तत्कालिकाकल्पे ताराकल्पे च ते मया ॥
श्रीदेव्युवाच । नानाविधानं देवेश ! कथयस्व प्रियंवद ! ।
विशेषतो महादेव ! रहस्यं जपमर्मणः ॥
ईश्वर उवाच । वर्णमाला शुभा प्रोक्ता सर्वमन्त्रप्रदीपनी ।
तस्याः प्रतिनिधिर्देवि ! महाशङ्खमयी शुभा ॥
महाशङ्खं करे यस्य तस्य सिद्धिरदूरतः ।
तदभावे वीरवन्द्ये ! स्फाटिकी सर्वसिद्धिदा ॥
मणिसंख्यां महादेवि ! मालायाः कथयामि ते ।
पञ्चविंशतिभिर्मोक्षं पुष्टस्तु सप्तविंशभिः ॥

त्रिंशद्भिर्धनसिद्धिः स्यात् पञ्चाशन्मन्त्रसिद्धये ।
अष्टोत्तरशतैः सर्वा सिद्धिरेव महेश्वरि ! ॥
एतत् साधारणं प्रोक्तं विशेषं कामिनां शृणु ।
दन्तमाला जपे कार्य्या गले धार्य्या शुभा नृषु ।
दशनैर्यदि कर्त्तव्या दन्तसंख्या तथा प्रिये ! ॥
सर्वसिद्धिप्रदा माला राजदन्तेन मेरुणा ।
अन्यत्रापि च देवेशि ! मेरुत्वेनैवमादिशेत् ॥
सङ्कल्पवाक्ये तु यत्संख्या संख्या तु जपहोमयोः ।
तत् शृणुष्व महेशानि ! क्रमेण कथयामि ते ॥
शतं सहस्रमयुतं लक्षं कोटिस्तथैव च ।
सर्वत्र परिसंख्येयमविशेषं महेश्वरि ! ॥
विशेषे तु महेशानि ! विशेषमाचरेत् क्वचित् ।
शतादि प्रतिसंख्यायामष्टोत्तरं जपेत् प्रिये ! ॥
आद्यन्तपर्वद्वितयं त्यक्त्वा चाष्टकपर्वभिः ।
जपान्ते च तथा मालां शिवस्य धारयेत्ततः ॥
रक्तपुष्पार्घ्यजीवेन घटवाद्यपुरःसरम् ।
देव्यै समर्पयेद्धोमान् फलं तज्जपकर्मणः ॥
साङ्गोपाङ्गेन देवेशि ! रहस्यं जपकर्मणः ।
उक्तं सरस्वतीतन्त्रे तस्माज्जानीहि कामिनि ! ॥
करमाला महेशानि ! शिवशक्तिक्रमेण च ।
शृणुष्व परमेशानि ! सर्वतन्त्रप्रसिद्धये ॥
अनामामध्यमारभ्य कनिष्ठादित एव च ।
तर्जनीमूलपर्य्यन्तं प्रजपेद्दशपर्वभिः ॥
मध्यमाया मूले पर्वणि मेरुत्वेन समाचरेत् ।
अष्टोत्तरं जपेद्देवि ! आद्यन्तद्वितयं त्यजेत् ॥
शिवमाला समाख्याता शक्तिमालां शृणुष्व मे ।

अनामामध्यमारभ्य कनिष्ठादित एव च ॥
तर्जनीमूलपर्य्यन्तं प्रजपेद्दशपर्वसु।
मध्यमाद्वितयं पर्व तर्जन्याः परमेश्वरि! ॥
मेरुं जानीहि देवेशि! तद्वयं न स्पृशेत् क्वचित्।
अष्टोत्तरजपे पर्व आद्यन्तद्वितयं त्यजेत् ॥
नित्यं जपं करे कुर्य्यात् न तु काम्यं कदाचन।
काम्यमपि करे कुर्य्यान्मालाभावे च मत्प्रिये ॥
नित्यकर्मार्च्चितजपो नित्यजापः स ईरितः।
स्नानं सतर्पणं होमोवलिस्तृप्तिश्च नित्यभाक् ॥
अनुलोमविलोमेन सर्वमालासु संजपेत्।
केवलञ्चानुलोमेन प्रजपेत् करमालया ॥
पुंमन्त्रं प्रजपेद्देवि! शिवसम्भवमालया।
शक्तिमन्त्रं जपेद्देवि! शक्तिसम्भवमालया ॥
चन्द्रमन्त्रं विना देवि! सावित्रीं वेदमातरम्।
सावित्रीं प्रजपेद्देवि! करेण शिवमालया ॥
चन्द्रमन्त्रं जपेद्देवि! करेण शक्तिमालया।
सावित्री जपने शस्ता सर्वदा करमालया ॥
स्फाटिकी मौक्तिकी कौषी शस्तापि शङ्खसम्भवा।
वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे ॥
त्रिपुराजपने शस्ता रुद्राक्षै रक्तचन्दनैः।
श्मशानधुस्तूरवीजैः शस्ता धूमावतीजपे ॥
करपर्वसमुद्भूता नाद्या संग्रथिता सती।
शस्ता च वगलामुख्याः सत्यं सत्यं महेश्वरि!।
असङ्ख्यिते सत्यं यन्न्यूनाधिकमथापि वा।
न सम्यक् फलभाग्भूयात् तस्मान्नियमसमाचरेत् ॥
ताम्रपात्रं सद्र्वञ्च सलिलं जलपूरितम्।

सकुशं सफलं देवि ! गृहीत्वाचम्य कल्पतः ॥
अभ्यर्च्य च शिरःपद्मे श्रीगुरुं करुणामयम् ।
यज्ञाशावदनो वापि देवेन्द्रवदनोऽपि वा ॥
मासं पक्षं तिथिञ्चैव देवपर्वादिकं तथा ।
आद्यन्तकालमुच्चार्य्य गोत्रं नाम च कामिनाम् ॥
क्रियाद्वयं करिष्येऽहमेशान्यामुत्सृजेत् पयः ।
चान्द्रः सौरस्तु सर्वत्र चान्द्रः स्यात्तिथिचोदने ॥
चान्द्रोऽपि मुख्यः सर्वत्र गौणस्तु क्रूरकर्मणि ।
ऋणदाने तथादाने पौष्टपथ्यादिषु प्रिये ! ॥
स्नानदाने तथा दाने पौष्टपद्यादिषु प्रिये !॥ इति पाठान्तरं
मासो नार्चत्रिकः प्रोक्तः सावनो वर्षपर्वणि ।
एवं युगे युगे प्रोक्तः कलौ सौरस्तु सर्वतः ।
सौरे मासि शुभा दीक्षा न चान्द्रे न च तारके ॥
न सावनो महेशानि ! यस्मात् सा विफला भवेत् ।
क्रियावती वेदमयी चान्द्रमासेऽपि शस्यते ॥
शुक्लपक्षे शुभं सर्वमशुभञ्च सितेतरे ।
प्रातःकालं समारभ्य यावन्मध्यन्दिनं रवेः ॥
तावत्कर्माणि कुर्वीत यः सम्यक् फलमीहते ।
क्रूरकर्माणि कुर्वीत शेषेऽपि परमेश्वरि ! ॥
गते तु प्रथमे यामे तृतीयप्रहरावधि ।
कालो नक्तं जपस्योक्तं पूजाकालमिति शृणु ।
सार्द्धयामे गते नक्तं सार्द्धयामे स्थिते सदा ।
पूजाकालो भवेद्यामश्चतुर्वर्गप्रदः सदा ॥
श्लिष्टे द्वे घटिके ये तु रात्रेर्मध्यमयामयोः ।
सा महारात्रिरुद्दिष्टा तत्कृतं चाक्षयं फलम् ॥
यद्यज्जप्तं हुतं यद्यत् कृतञ्च मोक्षसाधनम् ।

तत्सर्वमक्षयं याति तथानन्त्याय कल्पते ॥
न नक्तं वैष्णवे सौरे महासौरे च पैतृके।
न मध्याह्नं विना देवि! शशाङ्कग्रहणाद्विना ॥
दीक्षा कार्य्या प्रयत्नेन शुक्लपक्षविभेदतः।
मुक्तिकामः कृष्णपक्षे भुक्तिकामः सिते तथा ॥
भूतिकामे च कर्त्तव्यः कृष्णस्यापञ्चमाद्दिनात्।
शुभे काले शुभं सर्वमशुभञ्चार्त्तिभिश्चरेत् ॥
उपरागे महातीर्थे कालदोषो न विद्यते।
वाराणस्यां विशेषेण सर्वदा सर्वमाचरेत् ॥
सदाकृतयुगं तत्र सर्वदा उत्तरायणम्।
विशेषश्च दिवारात्रौ सन्ध्यायाञ्च महानिशि ॥
प्रत्यक्षं दृश्यते वह्नौ मूर्त्यावर्त्ते पुनः शिवे!।
काश्याञ्च नोदेति कदा सन्धियोगाद्वरानने! ॥
द्विविंश्यां क्रोशतः काशी पञ्चक्रोशी भवान्तरे।
आयामप्रस्थतो देवि! नित्येयं नित्यदा शुभे! ॥
इयं निर्वाणनगरी परं ज्योतिर्मयी शिवे!।
ब्रह्माण्डं स्थापयेत्तत्र सकूटं वस्तुमानवम् ॥
यत्र भ्रमणतो देवि! चानिर्वाणमवाप्नुयात्।
सर्वस्वेनापि कर्त्तव्यं वाराणस्यां द्विजार्पणम् ॥
वाराणस्यां द्विजस्थानं ब्रह्मयोगारतिस्तथा।
निष्कामे कर्मबन्धश्च सर्वं निर्वाणकारणम् ॥
गङ्गादिमुक्तिक्षेत्रादौ ज्ञानादियोगतस्तथा।
मृतं पूतं नयेत् काश्यां मुक्तौ ममोपदेशतः ॥
न वासोऽन्यत्र ये यस्मान्न मुक्तिः कालिकां विना।
तत्र यद्यत् कृतं कर्म तदनन्तफलं लभेत् ॥
अक्षयं हि भवेत् सर्वं दृढ़ा सिद्धिमवाप्नुयात्।

तत्र सांयोगिकं पुण्यं तत्र चैव विमुच्यते ॥
तत्राहं तत्स्वरूपेण पुष्णामि नान्यथा शिवे ! ।
स्वल्पत्वे तिथिकालत्वे क्रियाकालगतिर्भवेत् ॥
काले खलु समारभ्य अकालेऽपि समापयेत् ।
सन्ध्यायां पतितायान्तु गायत्रीं दशधा जपेत् ॥
ततः कालोचितां सन्ध्यां कृत्वा कर्म समापयेत् ।
इत्येवं कथितं तुभ्यं यत् पृष्टं गिरिसम्भवे ! ।
इतः परतरं किञ्चित् तद्ब्रूयां तव मानसे ॥

इति योगिनीतन्त्रे सर्वतन्त्रोत्तमोत्तमे देवीश्वरसंवादे चतुर्विंशतिसाहस्रे द्वितीयः पटलः ।

---

## तृतीयः पटलः ।

श्रीदेव्युवाच । भगवन् ! प्रमथाधीश ! देवदेव ! जगद्गुरो ! ।
युद्धस्य वारणं देव ! ज्वरादिवारणं तथा ॥
क्षिप्रं भवेत् कथं नाथ ! कृपया परया वद ।
नाशु त्राता च जगतां त्वां विना परमेश्वर ! ॥
ईश्वर उवाच । कथयामि तव स्नेहात् कवचं वारणं मन्वत् ।
युद्धस्य च ज्वरादेश्च क्षिप्रं हि नगनन्दिनि ! ॥
प्राकृतेनैव वाक्येन कथयामि शृणुष्व तत् ॥

ॐ नमो भगवति ! वज्रशृङ्खले ! हन्तु भक्षयतु खादतु र
पिब कपालेन रक्ताक्षि ! रक्तपटे ! भस्माक्षि ! भस्मलिप्तशरीरे
वज्रायुधप्रकारनिचिते ! पूर्वां दिशं बन्धतु दक्षिणां दिशं बन्ध
पश्चिमां दिशं बन्धतु नागार्थं धनाय ग्रहपतीन् बन्धतु नागप
बन्धतु प्रेतभूतगन्धर्वादयो ये ये केचित् पुत्रकास्तेभ्यो रक्षतु
रक्षतु अधो रक्षतु खनिकां बन्धतु जलमहाबले ! ह्योहि कोटि
लोङ्गिशताबलिवज्राग्निवज्रप्राकारे ! हुं फट् ह्रीं ह्रीं श्रीं फ

हुं हुं क्रूं फं फं सर्वग्रहेभ्यः सर्वदुष्टोपद्रवेभ्यो क्रौं अशेषेभ्यो मां रक्षतु।

इतीदं कवचं देवि! सुरासुरसुदुर्लभम्।
ग्रहज्वरादिभूतेषु सर्वकर्मसु योजयेत्॥
न देयं यत्र कुत्रापि कवचं मन्मुखात् च्युतम्।
दत्ते च सिद्धिहानिः स्यात् योगिनीनां भवेत् पशुः॥
दद्याच्छान्ताय वीराय सत्कुलीनाय योगिने।
सदचाररताय च निर्जिताशेषशत्रवे॥

श्रीदेव्युवाच। श्रुतं हि कवचं दिव्यं त्वन्मुखाम्भोजनिर्गतम्।
इदानीं श्रोतुमिच्छामि जगद्वश्यकरं परम्॥

ईश्वर उवाच। शृणु देवि! प्रवक्ष्यामि जगन्मोहकरं महत्।
नारदेन पुरा पृष्टं मयि कैलासमूर्द्धनि॥
कथितं कवचं तस्मै सर्वमोहकरं मया।
तेनैव कवचेनैव नारदो ब्रह्मसम्भवः॥
मोहयामास त्रैलोक्यं भित्त्वा हि कलहप्रियः।
तदसम्भवमालोक्य विष्णुराह विधेः सुतम्॥
कथं वा मोहितं सर्वं वद मे कारणं मुने!।
तत्सर्वमभवद्विष्णो विष्णुराह समुद्रजाम्॥
कैलासशिखरासीनं महादेवं जगद्गुरुम्।
पप्रच्छ नारदो धीमान् सर्वलोकहिते रतः॥

नारद उवाच। कालिकाया महाविद्यां श्रूयतां महतीं प्रभो!।
किमेतस्याः फलं देव! किमेतन्मोहनं भवेत्।
केनोपायेन समरे त्राणं मे वद शङ्कर!॥

ईश्वर उवाच। त्रिकाले गोपितं देवि! कलिकाले प्रकाशितम्।
काली दिगम्बरी देवी जगन्मोहनकारिणी।
तच्छृणुष्व मुनिश्रेष्ठ! त्रैलोक्यमोहनं त्विदम्॥

अस्य कालभैरव ऋषिरनुष्टुप्छन्दः श्मशानकाली देवता सर्वत्र मोहने विनियोगः। ऐँ क्लीँ हुँ क्रः स्वाहा विवादे पातु मां सदा। क्लीं दक्षिणकालिकादेवतायै सभामध्ये जयप्रदा। क्रोँ क्रोँ श्यामाङ्गि! शत्रुं मारय मारय क्रीं क्लीं त्रैलोक्यवश-मानय क्रीं श्रीं क्रीं मां रक्ष रक्ष विवादे राजगेहे च द्वाविंशत्य-क्षरा परा।

ब्रह्मराक्षसे वेताले सर्वत्र रक्ष मां सदा।
कवचैर्वर्जितं यत्र तत्र मां पातु कालिका॥
सर्वत्र रक्ष मां पातु देवी ममाग्रस्वरूपिणी।
एतेषां परमं मोहं भवन्नाग्ये प्रकाशितम्॥
सदा यस्तु पठेद्वापि त्रैलोक्यं वशमानयेत्।
इदं कवचमज्ञात्वा पूजयेद्घोरकामिनीम्॥
सर्वदा स महाव्याधिपीड़ितो नात्र संशयः।
अल्पायुः स भवेद्रोगी कथितं तव नारद!॥
धारणं कवचस्यास्य भूर्जपत्रे विशेषतः।
समन्त्रकवचं कृत्वा इच्छासिद्धिः प्रजायते॥
शुक्लाष्टम्यां लिखेन्मन्त्री धारयेत् स्वर्णपत्रके।
कवचस्यास्य माहात्म्यं नालं वक्तुं महामुने!॥
शिखायां धारयेद् योगी फलार्थी दक्षिणे भुजे।
इदं कल्पद्रुमं देवि! तव स्नेहात् प्रकाश्यते।
गोपनीयं प्रयत्नेन पठनीयं महामुने!॥

विष्णुरुवाच। इत्येवं कवचं नित्यं महालक्ष्मीः प्रापस्यताम्।
अवश्यं वशमायाति त्रैलोक्यं ते चराचम्॥
शिवेन कथितं पूर्वं नारदे च फलेप्सिते।
तत्पाठान्नारदेनापि मोहितश्च चराचरम्॥

श्रीदेव्युवाच। पुरामुने! जगद्वन्द्य! प्रमथेश! वरप्रद!

नराणामुपकाराय ब्रूहि योगं सुविस्तरम्॥
येनाशु लभते राज्यं येनाशु लभते सुतम्।
येनाशु लभते ज्ञानं येनाशु लभते धनम्।
येनाशु लभते कीर्त्तिं येनाशु लभतेऽखिलम्॥
ईश्वर उवाच। शृणु देवि! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
उक्तं फेत्कारिणीतन्त्रे नीलतन्त्रे च विस्तरम्॥
इदानीं विस्तराद्देवि! कथयामि शुचिस्मिते!।
उदेति पश्चिमे भानुश्चन्द्रो वा पतते भुवि॥
यदि शुष्यति पाथोधिर्न मिथ्या च कदाचन।
योगराजो महेशानि! अव्यर्थोऽयं सदैव हि॥
विष्णुचक्रं यथाऽव्यर्थं त्रिशूलञ्च यथा मम।
कुलिशं देवराजस्य तथा योगो मयोदितः॥
यथैव निश्चितं देवि! ब्रह्मणः कमलासनम्।
तथैव निश्चितो देवि! योगोऽयं नात्र संशयः॥
कल्पवृक्षो यथा देवि! आकाङ्क्षापरिपूरकः।
अयं योगवरो देवि! तथैव परिकीर्त्तितः॥
राज्यार्थञ्च कुलार्थञ्च सुतार्थं स्वर्णपत्रके।
आयामप्रस्थितो देवि! षोड़शाङ्गुलसम्मिते॥
यन्नार्थञ्च धनार्थञ्च कीर्त्त्यर्थं राजते शुभे।
तथा मानमिते देवि! तद्वत्ताम्रे विनाशने॥
स्वर्णे वा परमेशानि! अन्यार्थं भूर्जपत्रके।
लिखेन्मन्त्रं वरारोहे! तारिण्याः सर्वसिद्धिदम्॥
राज्यार्थी च धनार्थी च पुत्रार्थी कीर्त्तिकाम्यकः।
वृध्यर्थी विलिखेद्देवि! लेखन्या सुम[नो]हरम्॥
स्वर्णयष्ट्याष्टाङ्गुलायाः कनिष्ठायाः प्रमाणतः।
ज्ञानार्थं कुशमूलेन चान्यार्थं दूर्वया लिखेत्॥

आचम्य पुरतो देवि ! नत्वा च गुरुपादुकाम् ।
उत्तराशामुखो भूत्वा पूजयित्वा च तारिणीम् ॥
कुङ्कुमं रोचना जटामांसी चन्दनमेव च ।
काश्मीरं कस्तुरीं लाक्षां सिन्दूरञ्च वरानने ! ॥
सर्वमेकीकृतेनादौ षट्कोणचक्रमालिखेत् ।
तन्मध्ये विलिखेत्तारां सार्द्धवेदाक्षरीं पराम् ॥
सार्द्धपञ्चाक्षरीं वापि तन्मयो वेदमध्यगम् ।
साध्यं लिखेत्तच्च साध्यं शृणुष्व शम्भुवल्लभे ! ॥
अमुकस्यामुकं वाक्यं वशीकुरु च कुर्विति ।
अमुकस्यामुकं ज्ञानं सिद्धिं कुरु च कुर्विति ॥
अमुकीनां शुभं पुत्रमुत्पादयोत्पादयेति च ।
अमुकस्यामुकं धनं देहि देहीति कामिनि ! ॥
एवमेव क्रमेणैव साध्यं संलिख्य यत्नतः ।
क्लीवहीनान् दीर्घवर्णान् षट्कोणे षट् समालिखेत् ॥
वृत्तमष्टदलं पद्मं सुदृष्टं सुमनोहरम् ।
अष्टपत्रं लिखेत्तत्र किञ्जल्कयुगलं शुभम् ॥
अष्टपत्रे अष्टवर्णान् वक्ष्यमाणान् लिखेत्ततः ।
वाग्भवं भुवनेशानीं कामं हुं प्रणवं तथा ॥
मायामन्त्रं ततः स्वाहा पूर्वादिक्रमतो लिखेत् ।
चतुरस्रं चतुर्द्वारमेवं यन्त्रं समालिखेत् ॥
ज्ञानाख्यौ च सितयोऽर्ऽपि अन्यत्र त्वस्तोदये ।
गुरौ शुक्रे तथा सोमे मङ्गले वा बुधेऽह्नि च ॥
तारायां सानुकूलायां भजेन्मन्त्रं समाहितः ।
पीतवस्त्रे [illegible] संवेष्ट्य जतुना परिवेष्टयेत् ॥
पट्टवस्त्रेण रक्तेन बध्नीयात् साधकोत्तमः ।
स्वर्णपीठेषु संस्थाप्य संध्यानमाचरेत् कृती ॥

भूमिस्पृष्टं न तत् कुर्य्यात् न निर्माल्येन संस्कृतम्।
विदीर्णं लङ्घितं वापि नैव कुर्य्यात् कदाचन॥
आयामे प्रस्थितो देवि! षोड़शाङ्गुलमानतः।
घटं कुर्य्यात् प्रयत्नेन सर्वदृष्टिमनोहरम्॥
राज्यार्थी काञ्चनेनैव पुत्रार्थी रजतेन च।
ताम्रेण चैव युद्धार्थी मृदान्यत्र घटञ्चरेत्॥
तत्र मुक्तां प्रवालञ्च मणिं रजतकाञ्चने।
धान्यं क्षिप्त्वा मुखं तस्य पल्लवैः प्रतिपादयेत्॥
क्षौमयुग्मेन रक्तेन प्रच्छाद्य प्रयतः सुधीः।
अष्टाङ्गुलस्वर्णपत्रे चतुरस्रं समन्ततः॥
तत्र मन्त्रं लिखित्वैव घटे संस्थाप्य यत्नतः।
चतुःषष्ट्युपचारेण यजेत्तारां परां शिवाम्।
राजके पुष्पके देवि! षोड़शाच्छादनं कुले॥
किञ्जल्कैर्मण्डितं देवि! बलिमादाय पूर्ववत्।
निवेदयेन्महाभक्त्या बलिमन्त्रेण मन्त्रवित्॥
पञ्चामृतैः पञ्चगव्यैः स्नापयित्वा च पूजयेत्।
अष्टोत्तरसहस्रन्तु हुत्वा साधकसत्तमः॥
तत्पुटोपरि देवेशि! पुष्पाक्षतं विनिक्षिपेत्।
भूमिं ग्राममितां दद्याद्राज्यमिच्छति कामुकः॥
दक्षिणां युद्धकामी च काञ्चनाश्वौ महेश्वरि!।
शालग्रामशिलामेकां स्वर्णरेखाद्यलङ्कृताम्॥
ज्ञानसिद्धैर प्रदद्यात्तु अन्यत्र गाञ्च काञ्चनम्।
भोजयेद् ब्राह्मणान् धीरः कुमारीः कल्पपल्लवे!॥
ततस्तु साधयेद् यन्त्रं पुरुषो दक्षिणे भुजे।
नारी वामभुजे चैव शिशुश्च कण्ठगोचरे॥

इत्येवं कथितं रम्यं न देयं प्राणसङ्कटे ।

इति योगिनीतन्त्रे महातन्त्रराजे देवीश्वरसंवादे चतुर्विंशतिसाहस्रे तृतीयः पटलः ।

---

## चतुर्थपटलः ।

देव्युवाच । देवदेव ! जगद्वन्द्य ! सुरासुरनमस्कृत ! ।
इदानीं श्रोतुमिच्छामि वीरषट्कर्मसाधनम् ॥
धन्यं पुण्यवतां राज्ञां राज्यादिकवयोजुषाम् ।
स्त्रियास्तु सिद्धसंस्थानां सर्वभोगविलासिनाम् ॥
श्रीईश्वर उवाच । शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने तथा ।
मारणं परमेशानि ! षट्कर्मेदं प्रकीर्त्तितम् ॥
तारिणीं कालिकां छिन्नामधिकृत्य जगन्मयि ! ।
कथयामि तव स्नेहात् अतः सिद्धिकरं परम् ॥
रतिर्वाणी रमा ज्येष्ठा मातङ्गी कुलकामिनी ।
दुर्गा चैव भद्रकाली कर्मादौ कर्मसिद्धये ॥
षोड़शैरुपचारैश्च यजेद्वीरः स्वशक्तितः ।
शून्यागारे महारण्ये देवतायतनेऽपि वा ॥
पञ्चकर्म प्रकुर्वीत मारणन्तु शवोपरि ।
तदभावे पितृभूमौ वासांसि कथयामि ते ॥
मुख्यं दिगम्बरं ज्ञेयं द्वीपिचर्म द्वितीयकम् ।
तदभावे रक्तचौमं नान्यद्वस्त्रं प्रकल्पयेत् ॥
स्वर्णमादौ द्वितीये च राजतं स्तम्भने शिला ।
विद्वेषोच्चाटने ताम्रं कपालं मारणे शुभम् ॥
विप्रान्योऽपि नरः प्रोक्तो युवा च कृष्णवर्णकः ।
अदुर्भिचाव्याधिमृतो माला तस्य शुभावहा ॥

मृदौ वा कोमले वापि विष्टरे वा सुरेश्वरि ! ॥
मुण्डे वा योनिके देवि ! त्वचि व्याघ्रस्य वा प्रिये ! ।
एकहस्ते द्विहस्ते वा चतुर्हस्ते समन्ततः ॥
स्थिरासनश्चरेत् सम्यक् स्वाभयं तत्र चिन्तयेत् ।
भये जाते महेशानि ! भैरवोक्तमनुं जपेत् ॥
विषयुग्मं वज्रजाले हनयुग्ममतःपरम् ।
सर्वभूतानतः कूर्चमन्त्रान्तो भैरवो मनुः ॥
ततो भूतवलिं दद्यात् साधको धर्मसम्मितम् ।
अश्वत्थेन महेशानि ! तद्धर्मकीलकञ्चरेत् ॥
सूर्य्यवारादियोगेन पञ्च कर्म समाचरेत् ।
शनौ च मारणं देवि ! लिखितं वीरवन्दिते ! ॥
रात्रियोगे च कर्त्तव्यं सर्वकर्म शुचिस्मिते ! ।
प्राग्विद्वान् प्रजपेत् सम्यक् स्वमन्त्रमयुतं शिवे ॥
प्रयोगस्य फलावाप्तौ स्वस्वरक्षाकरं महत् ।
ततः साध्यदिने मन्त्री याममात्रे गते निशि ॥
मादिभिः पञ्चभिर्द्रव्यै यजेत् कुलविनाशिनीम् ।
दिग्वासा गलिताशेषचिकुरः कुलकौलिकः ॥
शक्तियुक्तो जपेद्विद्यां सदा त्वां मनसा स्मरेत् ।
लक्षसङ्ख्यं महेशानि ! शक्तिपूजा पुरःसरम् ॥
प्रत्यहं भोजयेद्विप्रान् कौलिकाद्यान् दिनान्तरे ।
मांसं मद्यं तथा मत्स्यं हुनेद्वह्नौ शतं शतम् ॥
दक्षिणां गुरवे दद्यात् गुरुरूपेण शाम्भवि ! ।
एवमुक्तविधानेन दिग्भ्यो वा वीरपुङ्गवः ॥
यदि कुर्य्यात् महेशानि ! देवानपि तथा नयेत् ।
नापेक्षा जायते कान्ते ! चावश्यं फलभाग्भवेत् ॥

पूजान्ते सततं देवि ! तन्मांसैर्वह्निमर्च्चयेत् ॥
विधिः सर्वत्र कथितो दिव्यवीरपशुक्रमात् ।
क्रमेण फलमाप्नोति व्यत्यये पातकी भवेत् ॥
इत्येवं कथितं तुभ्यं सम्यक् षट्कर्मगोचरम् ।
गोपनीयं खले दुष्टे पशुग्रामरसन्निधौ ॥
श्रीदेव्युवाच। सुराद्याः किंविधा देव ! शक्तिर्वा कीदृशी शुभा ।
षट्कर्मसु यथायोग्यं वद मे करुणानिधे ! ॥
ईश्वर उवाच। माध्वी शान्तिकरी प्रोक्ता वैश्ये च स्फाटिकी शुभा
स्तम्भने डाकिनी ज्ञेया विद्वेषे पैष्टिकी मता ॥
उच्चाटने तथा गौड़ी मारणे भैरवी मता ।
एतासां लक्षणं देवि ! कथितं कुलमोहने ! ॥
पद्मिनी शान्तिदा प्रोक्ता वश्ये च शङ्खिनी मता ।
स्तम्भनोच्चाटने देवि ! प्रशस्ता नागवल्लभा ॥
मारणे च तथा शस्ता डाकिनी शत्रुमृत्युदा ।
गौराङ्गी दीर्घकेशी या सदा चामृतभाषिणी ॥
रक्तनेत्रा सुशीला च पद्मिनी साधने शुभा ।
मन्त्रसिद्धिकरी ह्येषा शङ्खिनी सापि भाविनि ! ॥
दीर्घाङ्गी सा शङ्खिनी स्याज्जगद्रञ्जनकारिणी ।
समाङ्गी शूद्रदेही च न खर्वा नातिदीर्घका ॥
दीर्घकेशी शतपुष्टा मृदुभाषा च नागिनी ।
कृष्णाङ्गी च कृशाङ्गी च दन्तुरा मदतापिता ॥
ह्रस्वकेशी दीर्घघोणा सदा निष्ठुरवादिनी ।
सदा क्रुद्धा दीर्घदेहा महारावपरायणा ॥
निर्लज्जा हास्यहीना च निद्रालुर्बहुभक्षिका ।
इयं सा डाकिनी प्रोक्ता मृत्युयोगे प्रशस्यते ॥
एतास्तु शक्तयो देवि ! सर्वकार्य...

सापत्याश्च सुरत्यश्च जातपुत्रादिकाः शुभाः।
ग्राह्या कुलरसैः पूज्या भक्तिभावेन कामिनी॥
देव्युवाच। केन केन च मन्त्रेण मन्त्री षट्कर्मभाग्भवेत्।
तत्तन्मवं महेशान! यद्यहं तव वल्लभा॥
ईश्वर उवाच। एकाक्षरं कालिकायास्तारायास्तु त्रिवीजकम्।
वज्रवैरोचनीयो यो मनुरेकादशाक्षरः॥
सर्वतेजोऽपहारी च मनुराख्यात एव च।
बहुनात्र किमुक्तेन शृणु मत्प्राणवल्लभे!॥
केवलं शक्तियुक्तश्च जपेद्देवीं समाहितः।
अवश्यं फलमाप्नोति नान्यथा वीरवन्दिते!॥
खलो यदि फलप्राप्तः सफलो यदि निष्फलः।
भवेदेतत् महेशानि! तदा सर्वं वृथा भवेत्॥
अहं धाता तथा पाता रक्षाम्युद्योगिनः शिवे!
तथापि न हि सिद्धिः स्यात् चित्रमेतन्नगात्मजे!॥
एवन्तु मारणं देवि! विशेषात् कथयामि ते।
सान्तं वह्निसमायुक्तं वामनेत्रविभूषितम्॥
क्रीँ हुँ हुँ अमुकं मारय मारय स्वाहा। कूर्च्चयुग्मं ततो देवि! अमुकं मारय मारय।
चतुर्दशाक्षरो मन्त्रः स्वाहान्तः शत्रुनाशकः।
खादिराङ्गारमादाय कुजाष्टम्यां विशेषतः॥
लेखयेत् पुत्तलीं शत्रुस्वरूपां लौहपात्रके।
निशायां मस्तके नेत्रे ललाटे हृदये करे॥
नाभौ गुह्ये कटौ पृष्ठे क्रमोक्तेन पदद्वये।
मन्त्रवर्णान् समालिख्य प्रतिष्ठां तत्र कारयेत्॥
संहारमुद्रां बध्वा तु ध्यायेद्देवीं जयप्रदाम्।
दीर्घाकारां कृष्णवर्णां महोर्द्धस्तनमस्तकम्॥

नृमुण्डयुगलं हस्ते चर्वयन्तीं दिगम्बरीम् ।
शत्रुनाशकरीं देवीं ध्यायेच्छत्रुच्चयाय च ॥
एवं ध्यात्वेष्टकाचूर्णैर्वामहस्तेन शङ्करि ! ।
ॐ शत्रुनाशकर्त्र्यै नम इति दत्त्वा महेश्वरि ! ॥
हरिद्राचूर्णसहितां धारां दद्यादनेन तु ।
अमुकस्य शोणितं पिब पिबेति तत्परम् ।
मांस खादय खादय क्रों नम इति मन्त्रतः ॥
मध्याह्ने मध्यरात्रौ तु पूजयित्वा शताष्टकम् ।
जपेदेकादशाहे च रोगः स्यात् नात्र संशयः ॥
दण्डाधिकैकविंशाहे मृत्युरेव रिपोर्ध्रुवम् ।
अथवान्यप्रकारेण शत्रुच्चयमहं वदे ॥
पुङ्गोशकृत् समादाय पूजयेदुष्णवारिणा ।
विपरीतक्रमेणैव जपपूजादिकं चरेत् ॥

महादेवाय नम इति पुङ्गोशकृत् समाहरेत् । शिवाय नम इति मन्त्रेण गठनञ्च समाचरेत् । पशुपतये नम इति प्राणान् संस्थापयेत्ततः ।

लौहपात्रे महेशानि ! खादिराङ्गारयोगतः ।
शत्रुप्रतिकृतिं लिख्य तत्र संस्थापयेच्छिवम् ॥
ततो ध्यायेत् महारुद्रं ध्यानं शृणु समाहितः ।
शत्रोर्वक्षःस्थितं रुद्रं ज्वलदग्निसमप्रभम् ॥
वामहस्तधरं केशं दक्षिणप्राणकर्षणम् ।
नरचर्माम्बरं देवं महाव्यालादिवेष्टितम् ।
पिनाकधृगिहागच्छ इत्यादिना आवाह्य यत्नतः ।
शूलपाणये नम इति स्नापयेत् साधकोत्तमः ।
महेश्वराय नम इति पाद्यादिना प्रपूजयेत् ।
ईशानादिं तथा मूर्त्तिं व्युत्क्रमेण प्रपूजयेत् ।

अग्निकोणादिपर्य्यन्तं सूर्य्यरीत्या महेश्वरि!॥
यः शिवः मनन ॐ मूलमष्टाविंशति संजपेत्।
हुँ क्षमयेति वामेन करेण तु विसर्जयेत्।
अजित केशव विष्णो हरे सत्य जनार्दन!।
हंस! नारायण! स्वाहा मन्त्रमेव सकृज्जपेत्॥

हुँ नमो भगवते वासुदेवाय स्वाहा इति यः शिवः नम इत्यपि सकृज्जपेत्।

एवमेकादशाहेन शत्रून्मादनमञ्जसा।
अवश्यं जायते देवि! सत्यं सत्यं त्रिलोचने!॥
कथयामि महादेवि! वैरस्तम्भनमुत्तमम्।
कुम्भकारस्य पयनादानयेत् पिठरं जलम्॥
एकः स्वयं द्विकः स्फुटं यत् कृतं साधकोत्तमः।
आनीय च ऊखामध्याङ्गस्म पर्य्युसितं तथा॥
निःक्षिप्य पिठरे शुष्कनालिकापत्रविस्तरम्।
भस्मोपरि च संस्थाप्य वाटिकायाः सुरेश्वरि!॥
ऐशान्यां विवरं कृत्वा शनैर्वारि महेश्वरि!।
पुनर्मध्याह्नकाले च निर्जने सति भाविनि!॥
चतुर्दिक्षु वाटिकाया गर्त्तस्य निकटात् प्रिये!।
तत्तावतीमहं भूमिं चौरेभ्यो रक्षयामि च॥
प्रफुल्लमनसा देवि! भूमौ परिग्रहञ्चरेत्।
तावतीञ्च ततो भूमिं वामावर्त्तेन भाविनि!॥
परिक्रम्य पुनस्तत्र गर्त्तस्य निकटं व्रजेत्।
तत्रैव निर्जने गर्त्ते शलाकां लौहनिर्मिताम्॥
रोपयित्वा तदुपरि पिठरं सशरावकम्।
संस्थाप्य मृद्भिः संपूर्य्य तद्गर्त्तं गृहमाव्रजेत्॥
गतिस्तम्भं भवेद्देवि! चौरादीनां तथा खलु।

अयं योगवरो देवि ! दुर्लभो वसुधातले ॥
पिशाचभूतवेतालकुष्माण्डब्रह्मरक्षसाम् ।
दानवानां तथान्येषां गतिस्तत्र प्रजायते ॥
धनपुत्रसमृद्धिस्तु वर्द्धतेऽहर्निशं तथा ।
दिने दिने धर्मवृद्धिर्जायते नात्र संशयः ॥

इति योगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशतिसाहस्रे चतुर्थः पटलः ।

---

## पञ्चमः पटलः ।

श्रीदेव्युवाच । भगवन् सर्वधर्मज्ञ ! लोकानुग्रहकारक ! ।
साधनं सर्वमन्त्रस्य सर्वाशापरिपूरकम् ॥
शय्यायां साधनमादौ वच्मेऽहं परमाद्भुतम् ।
सार्द्धयामगतायान्तु निशायां साधकोत्तमः ॥
भूत्वा दिगम्बरः सम्यगाचम्य विधिवत्तदा ।
अभ्युक्ष्य मूलमन्त्रेण शय्यायां तत्र संविशेत् ॥
गुरुं परगुरुञ्चैव परापरगुरुं तथा ।
परमेष्टिगुरुञ्चैव वामेऽभ्यर्च्य गणेश्वरम् ॥
दक्षिणे च भ्रुवोरूर्द्ध्वं श्मशानवासिने नमः ।
ततो मायमासनाय नम इत्यर्च्चयेच्छिवे ! ॥
शय्यां शय्यातले देवि ! प्रणवं वाग्भवञ्च फट् ।
लिखित्वाचम्य यत्नेन स्वमन्त्रोक्तविधानतः ॥
प्रणवं मणिधराञ्चैव वज्रिणि चेन्महापदम् ।
प्रतिसरे रक्ष रक्ष मां हुँ फट् स्वाहया युतम् ॥
अनेन मनुना देवि ! शिखां बध्वा विधानतः ।
अङ्गन्यासकरन्यासौ मातृकान्यासमेव च ॥
भूतशुद्ध्यादिकं कृत्वा हृत्पद्मे परमां शिवाम् ।
ध्यात्वा भक्त्या समभ्यर्च्य मानसैः साधकोत्तमः ।

शय्यातले प्रणीयतां मन्त्रोपरि वरानने ! ।
प्रणवञ्च ततो देवि ! वटुकेभ्यो नमस्तथा ॥
इति मन्त्रेण मनसा वटुकं पाद्यादिभिर्यजेत् ।
ततस्तु वह्निवीजेन समन्ताज्जलधारया ॥
वह्निप्राचीरमाचिन्त्य सङ्कल्पञ्च समादरात् ।
जपं कृत्वा समर्प्याथ विधिना परमेश्वरि ! ॥
पुनः सङ्कल्प्य देवेशि ! कुर्य्यात् सर्वक्रमं शिवे ! ।
होमञ्च तर्पणञ्चैव अभिषेकं ततःपरम् ॥
विप्रस्य भोजनञ्चैव अभावे द्विगुणं जपेत् ।
काञ्चनं दक्षिणां दत्त्वाच्छिद्रावरणञ्चरेत् ॥
संप्रोच्य वटुकं देवि ! क्षमस्वेति विसर्जयेत् ।
एवमुक्तं महादेवि ! शय्यासाधनमुत्तमम् ॥
मन्त्रसिद्धिकरं शीघ्रमस्मत्सायुज्यदायकम् ॥
अथ शृणु त्रिवाटस्य चतुर्वाटस्य साधनम् ।
गत्वा तु त्रिपथं वापि चतुष्पथं वरानने ! ॥
प्रणमेद् गुरुमभ्यर्च्य मणिधरीति च मन्त्रतः ।
बध्वा ग्रन्थिन्तु वस्त्रान्ते निर्भयः साधकोत्तमः ॥
श्मशानवासिनो ये ये देवा देव्यश्च भैरवाः ।
दयां कुर्वन्तु ते सर्वे सिद्धिदाश्च भवन्तु मे ॥
प्रणमेत् प्रणवाद्येन मनुनानेन भक्तितः ।
ततः पूर्वमुखो वापि उत्तराशामुखोऽपि वा ॥
उपविश्य समाचम्य स्वस्तिवाच्य महेश्वरि ! ।
स्थानं सम्मार्ज्य तत्रैव प्रेतवीजं लिखेत् सुखीः ॥
वीजोपरि महादेवि ! विहितासनमास्तरेत् ।
तत्रोपविश्य देवेशि ! हृदीष्टदेवतां स्मरेत् ।
यथेष्टमनसाराध्यमष्टासु च बलिं हरेत् ।

काल्यादिभ्यो महेशानि ! पूजयित्वा विधानतः ॥
काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ।
विप्रचित्ता तथा नीला वलाका च मुनिद्विषः ।
प्रणवाद्या ङेनमोऽन्ताः पूजाबल्यादिकाः स्मृताः ॥
सङ्कल्पप्राष्टोत्तरशतं जपाच्छिद्रावधारणम् ।
कृत्वा स्थानं परित्यज्य देवीं स्मृत्वा गृहं व्रजेत् ॥
एवमुक्तं साधनं ते सर्वसिद्धिनिषेवितम् ।
यस्मै कस्मै न दातव्यं साधकानां परं हितम् ॥
अतःपरमहं वक्ष्ये विल्वमूलस्य साधनम् ।
विल्वमूलं महेशानि ! समन्तात् षोड़शं करम् ॥
मम जटास्वरूपं हि पर्णं जानीहि सुन्दरि ! ।
ऋग्यजुःसामसदृशं पत्रत्रयं वरानने ! ॥
शाखा हि सर्वशास्त्राणि जानीहि मीनलोचने ! ।
कल्पवृक्षसमो विल्वो ब्रह्मविष्णुशिवादयः ।
महालक्ष्मीर्विल्ववृक्षो जातः श्रीशैलपर्वते ॥
श्रीदेव्युवाच । कथं सा विष्णुवनिता विल्ववृक्षो बभूव ह ।
वृत्तान्तं परमाश्चर्यं वद मे करुणामय ! ॥

श्रीईश्वर उवाच ।

शृणु देवि ! प्रवक्ष्यामि वृत्तान्तं परमाद्भुतम् ।
सत्ये तु पूजयामास लिङ्गं रामेश्वराभिधम् ॥
ज्योतीरूपं मदीयांशं प्रार्च्य ब्रह्मादिभिः सह ।
तत्र मेऽनुग्रहात् वाणी सर्वेषां प्रियतां गता ॥
विष्णोरतिप्रिया नित्यं साभूत् सरस्वती सदा ।
तादृक् प्रीतिर्न लक्ष्म्याश्च जायते केशवस्य च ॥
इति चिन्तापरा लक्ष्मीर्ययौ श्रीशैलमुत्तमम् ।
प्राप्य मल्लिङ्गमेकान्ते तपस्तेपेऽतिदारुणम् ॥

तथापि यदि नैवाभूत् कृपा मे परमेश्वरि ! ।
तदा सा वृक्षरूपेण स्थिता लिङ्गाग्रतः सती ॥
पत्रैः पुष्पैः फलैः स्वीयैः पूजयामास सन्ततम् ।
कोटिवर्षं महेशानि ! ततो मेऽनुग्रहोऽभवत् ॥
तेनैवानुग्रहेणैव विष्णोर्वक्षःस्थिता भवेत् ।
सदैव परमेशानि ! विहरेत् सा सदैव हि ॥
अतस्तु कारणाद्देवि ! तद्रूपेण हरिप्रिया ।
सदैवापूजयत् मां सा मद्भक्ता सातुला शिवे ! ॥
अतस्तु वृक्षमास्थाय तिष्ठामि च दिवानिशम् ।
सर्वतीर्थमयो देवि ! सर्वदेवमयः सदा ॥
श्रीवृक्षः परमेशानि ! अतएव न संशयः ।
तत्फलैस्तत्प्रसूनैर्वा तत्पत्रैर्यः प्रपूजयेत् ॥
तत्काष्ठचन्दनैर्वापि स मे भक्तः स मे प्रियः ।
तत्काष्ठचन्दनं भाले यो धारयति संभ्रमात् ॥
तत्तनूं शिवबुद्ध्या वा नमेद्देवि ! मुदान्विता ।
अतस्तच्चन्दनं देवि ! धारयेन्न कदाचन ॥
तत्पत्रं तत्प्रसूनं वा कदापि धारयेन्न हि ।
विल्वमूले महेशानि ! प्राणांस्त्यजति यो नरः ॥
रुद्रदेहो भवेत् सत्यं पापकोटियुतो हि सः ।
अतस्तत्साधनं देवि ! सर्वेषां प्रियकारकम् ॥
यत्र गत्वा विल्वमूलं प्राग्वद्गुरुचतुष्टयम् ।
अभ्यर्च्य यत्नतो देवि ! क्षेत्रपालं प्रपूज्य च ॥
क्षेत्रपाल ! महाभाग ! श्मशानाधिप ! सुव्रत ! ।
सिद्धिं देहि जगत्कर्त्ता देहि स्थानं नमोऽस्तु ते ॥
अनेन प्रणवाद्येन मनुना प्राणमित्ततः ।
ततः स्थानन्तु संपूज्य लिखे[illegible]त्र वरानने ! ॥

वाग्भवं प्रेतबीजञ्च पुनर्वाग्भवमेव च ।
तदन्ते मूलमन्त्रञ्च विलिखेत् साधकोत्तमः ॥
पूजयित्वा च काल्याद्याः पूर्ववत् परमेश्वरि ! ।
संकल्पग्राष्टोत्तरयुतं जप्वाच्छिद्रावधारयेत् ॥
परित्यज्य ततः स्थानं गुरुं स्मरन् गृहं व्रजेत् ।
इत्येवं कथितं तुभ्यं सारात् सारं परात् परम् ॥
गोपनीयं सदा भद्रे ! विशेषात् पशुसंकुले ।
इदानीं शृणु देवेशि ! मुण्डसाधनमुत्तमम् ॥
यत् कृत्वा साधको याति महादेव्याः परं पदम् ।
नरमहिषमार्जारमुण्डत्रयं वरानने ! ॥
अथवा परमेशानि ! नृमुण्डत्रयमादरात् ।
शिवासर्पसारमेयनृणां भवा महेश्वरि ! ॥
नरमुण्डं तथा मध्ये पञ्चमुण्डानितीरितान् ।
अथवा परमेशानि ! नराणां नरमुण्डकान् ॥
तथा शतं सहस्रं वाऽयुतं लक्षं तथैव च ।
नियुतञ्चाथवा कोटिं नृमुण्डान् परमेश्वरि ! ॥
नरमुण्डं स्थापयित्वा प्रोथयित्वा धरातले ।
वितस्तिप्रमितां देवीं तस्योपरि प्रकल्पयेत् ।
आयामप्रस्थितो देवि ! चतुर्हस्तौ समाचरेत् ॥
सहस्रं लक्षपर्यन्तं षोड़शीं हस्तसम्मिताम् ।
ततःपरं महादेवि ! शतहस्तमिताञ्चरेत् ॥
तस्यास्तु भूतनाथादीन् चतुर्दिक्षु समर्चयेत् ।
पूर्वोक्तभूतनाथाय नमो मन्त्रेण देशिकः ॥
पाद्यादिभिः पूजयित्वा वलिं दद्यात् प्रयत्नतः ।
एवन्तु दक्षिणे देवि ! श्मशानाधिपमादरात् ॥
तद्वच्च पश्चिमे भागे कालभैरवमुत्तमम् ।

श्मशानमुत्तरे तद्वत् पूजयित्वा वलिं ददेत् ॥
वेदीमध्ये प्रेतवीजं फट्कारं तदनन्तरम् ।
पाद्यादिभिरनेनैव कुण्डेभ्यः परिपूजयेत् ॥
नैर्ऋत्यां क्रीं चण्डिकायै वीजं विलिख्य साधकोत्तमः ।
तत्रैव पूजयेद्भक्त्या भारतीं स्वस्वविग्रहाम् ॥
वाग्देवता ङेयुता च नमोऽन्तवाग्भवादिना ।
अनेन मनुनाभ्यर्च्य वलिं तस्यै निवेदयेत् ॥
हे वीर ! शवदेवेश ! मुण्डरूप ! जगत्पते ! ।
दयां कुरु महाभाग ! सिद्धिदो भव मज्जपे ॥
वेदिकोपर्य्यनेनैव पुष्पाञ्जलित्रयं क्षिपेत् ।
शवं कुर्य्याद् वह्निसंस्थं पाशमिन्दुकलान्वितम् ॥
मायावीजं कूर्चवीजं फट्कारं तदनन्तरम् ।
पाद्यादिभिरनेनैव कुण्डेभ्यः परिपूजयेत् ॥
नैर्ऋत्यां क्रीं चण्डिकायै नमो मन्त्रेण देशिकः ।
वायव्ये क्रीं भद्रकाल्यै नमो मन्त्रेण तत्परम् ॥
ईशाने क्रीं दयायै नमो मन्त्रेण शाम्भवि ! ।
अग्नौ क्रीं चण्डोग्रायै नमो मन्त्रेण साधकः ॥
पूजयित्वा वलिं दत्त्वा उत्थाय संमुखे ततः ।
श्मशानवासिनो ये ये देवा देव्यश्च भैरवाः ॥
दयां कुर्वन्तु ते सर्वे सिद्धिदास्ते भवन्तु मे ।
अनेन प्रणवाद्येन पुष्पाञ्जलित्रयं क्षिपेत् ॥
ततः स्थानन्तु संस्पृश्य वशो भव वदेदिति ।
विष्टरासनमास्तीर्य्य उपविश्य महेश्वरि ! ॥
अष्टाधिकायुतं जपं कृत्वाच्छिद्रावधारयेत् ।
स्थानं परिष्कृत्य नत्वा देवीं ध्यायन् गृहं व्रजेत् ॥
पुरश्चर्य्याविधौ देवि ! शेषं शृणुष्व शाम्भवि ! ।

कीलकं नैव कुर्य्यात्तु त्रिमुण्डोपरि कर्हिचित् ॥
शून्यागारे नदीतीरे पर्वते वा चतुष्पथे ।
बिल्वमूले श्मशाने वा निर्जने चैकलिङ्गके ॥
एतेषु प्रोथयेन्मुण्डान् सर्वकामार्थसिद्धये ।
एवं वा प्रोथयित्वा च नारं मुण्डं विधानतः ॥
अनेन सर्वसिद्धीशो बहुभिः किमु सुव्रते ! ।
इत्येवं कथितं देवि ! मुण्डानां साधनं शिवे ! ।
यत् कृत्वा सर्वसिद्धानामधिपो भुवि जायते ॥
इति योगिनीतन्त्रे सर्वतन्त्रोत्तमोत्तमे देवीश्वरसंवादे
चतुर्विंशतिसाहस्रे पञ्चमः पटलः ।

---

## अथ षष्ठः पटलः ।

देव्युवाच । भगवन् ! सर्वधर्मज्ञ ! सर्वागमविशारद ! ।
गुरुस्त्वं सर्वमन्त्राणां करुणामयसागर ! ॥
सर्वधर्मकृता यूयं योगिहृत्पद्मभास्कराः ।
दिव्यभावो वीरभावो महत्वेन प्रदर्शितः ।
त्वया तत्र विशेषेण वद मे चन्द्रशेखर ! ॥
ईश्वर उवाच । दिव्यवीरविभेदेन योगद्वयं समीरितम् ।
तद्‌योगादभवत् कौलो दिव्यवीरो महेश्वरि ! ॥
तद्‌योगं हि विना देवि ! तत्कर्म यः समाचरेत् ।
समायोगी यजेद्देवि ! मुमुक्षुः कुलकामिनि ! ॥
तावच्च ते प्रवक्ष्यामि श्रुत्वा कर्णेऽवतंसय ।
आत्मानं परमं ब्रह्म चिन्तयेदथवा न चेत् ॥
आत्मदेहं स्वेष्टरूपं सदैव परिचिन्तयेत् ।

ब्रह्माण्डञ्च तथा सर्वं स्वेष्टरूपं विभावयेत्।
दिव्ययोगमिदं देवि ! सावधानेन गोपय॥
वीरयोगं शृणुष्वेमं सर्वदेवनमस्कृतम्।
विन्दुत्रयं कलाक्रान्तं प्रथमं परिचिन्तयेत्॥
ततस्माद्भावयेज्जातं स्त्रीरूपं षोड़शाब्दिकम्।
बालार्ककोटिसंज्योतिः प्रकाशितदिगम्बरम्॥
मूर्द्धादि स्तनपर्य्यन्तमूर्द्ध विन्दोः समुद्भवम्।
विन्दुयावन्मध्यदेहं कण्ठादिकटिशीर्षकम्॥
स्तनद्वयेन भासन्तं त्रिवलीपरिमण्डितम्।
योन्यादिकञ्च पादान्तं कामान्तं परिचिन्तयेत्॥
नानालङ्कारभूषाढ्यं ब्रह्मेशविष्णुवन्दितम्।
एवं कामकलारूपं स्वात्मदेहं विचिन्तयेत्॥
सदैव परमेशानि ! वीरयोगमिमं शृणु।
संक्षेपात् कथयिष्यामि तयोराचारमुत्तमम्॥
मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च।
इदमाचरणं देवि ! पशोर्न दिव्यवीरयोः॥
स देवाचारवान् भूयात् दिव्यो वीरो महेश्वरि !।
यदि दैवात् महेशानि ! मद्यादि च न लभ्यते॥
कस्मिन्नहनि देवेशि ! तदात्मानं समाचरेत्।
तथापि न हि वक्तव्यमिदमाचमनं शिवे !॥
महामद्यं विना कौलः क्षणादूर्द्धं न तिष्ठति।
तस्मात् मद्यादिकं देवि ! सेवितव्यं दिने दिने॥
अनुष्ठानविधिं वक्ष्ये शृणु त्वं पर्वतात्मजे !।
गुरुणा दीक्षितो भूत्वा कौलन्यासं समाचरेत्॥
तद्विधिश्चोत्तरे तन्त्रे एतत् स्यात्तु कुलार्णवे।
मयोक्तं तत्क्रमेणैव अभिषेकद्वयं चरेत्॥

नाम लब्ध्वा गुरोश्चापि वृणुयाद् योगमुत्तमम् ।
दिव्यं वा वीरयोगं वा यथा कर्मानुसारतः ॥
तत्क्षणात् प्रियतामित्य मुक्तो भवति कालतः ।
यस्तु दिव्यो भवेत् सत्यं स विष्णुर्नात्र संशयः ॥
यो रुद्रो भविता शेषे वीर एव न संशयः ।
यत्र देशे नरस्तिष्ठेद् दिव्यो वा वीरपुङ्गवः ॥
तत्तत्कुलं वा देवेशि ! स देशः क्षितिराट् स्वयम् ।
सिद्धिक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ॥
तत्रैव सर्वतीर्थानि तत्र गङ्गा सरिद्वरा ।
योगिनीदुर्लभाप्येतड्डाकिनीभिः सरीसृपैः ॥
ब्रह्मराक्षसवेतालैः कुष्माण्डैर्भैरवैः शिवैः ।
गुह्यकैर्दानवैर्वापि मारीभिर्यक्षकिन्नरैः ॥
रोगैर्दुष्टमृगैश्चैव दुर्भिक्षैः सर्पसंकुलैः ।
अवश्यं मङ्गलं तत्र तत्पुरीपरिवर्द्धनम् ॥
सुभिक्ष्यं क्षेममारोग्यमेवं ते धर्मकोषकः ।
स्फुरन्ति सर्वशास्त्राणि सर्वस्मादपि नित्यशः ॥
ब्रह्मविष्णुशिवादीनां सुप्रियः साधकोत्तमः ।
तरवोऽपि हि जीवन्ति पशुः पक्षी स जीवति ॥
कुलधर्मे मनो यस्य स्वधर्मश्च व्यवस्थितः ।
यत्र कुत्र मृतो देवि ! दिव्यो वा वीरपुङ्गवः ॥
तत्रैव परमं ज्ञानं कर्णमूले ददाम्यहम् ।
कुलधर्ममिमं देवि ! संसेव्यं सनिरन्तरम् ॥
कुलधर्मपरा देवि ! सर्वे च त्रिदिवौकसः ।
मुनयो मनवो नागाः सिद्धगन्धर्वकिन्नराः ॥
ऋषयो वसवो दैत्या येऽपि स्युः कुलपुङ्गवाः ।
कुलधर्मप्रसादेन ते सर्वे कुलनायकाः

इन्द्राद्याः खेचरारूढ़ा भवेयुश्चिरजीविनः ।
ये यथा मां प्रपद्यन्ते ते तथा फलभागिनः ॥
ब्राह्मणः क्षत्रियो वैश्यो ब्रह्मचारी गृही तथा ।
वानप्रस्थो यतिश्चैव भवेयुस्ते कुलानुगाः ॥
तेषां विधिं शृणुष्वाद्यमतस्त्वं कुलनायिके ! ।
गुड़ार्द्रकरसेनैव सुरा तु ब्राह्मणस्य च ॥
नारिकेलोदकं कांस्ये क्षत्रियस्य वरानने ! ।
वैश्यस्य माक्षिकं प्रोक्तं कांस्यस्थं वरवर्णिनि ! ॥
मांसं मत्स्यन्तु सर्वेषां लवणार्द्रकमीरितम् ।
भर्ज्जधान्यादिकं यद्यच्चर्वणीयं प्रचक्षते ॥
सा मुद्रा कथिता देवि ! सर्वेषां नगनन्दिनि ! ।
ब्राह्मणी ब्राह्मणस्यैव क्षत्रिया क्षत्रियस्य च ॥
वैश्या वैश्यस्य देवेशि ! मैथुने यद्विधिः स्मृतः ।
वैश्या वा ब्राह्मणी क्षत्राविवर्णानां महेश्वरि ! ॥
क्षत्रिया ब्राह्मणस्यापि कथिता वरवर्णिनि ।
शूद्रा वा ब्राह्मणादीनां त्रिवर्णानामभावतः ॥
ब्रह्मक्षत्रविशाञ्चैव आश्रमिणामिदं स्मृतम् ।
त्रिवर्णविहितानाञ्च यतीनां शृणु सम्प्रति ॥
सहस्रारोपरि विन्दौ कुण्डल्या मेलनं शिवे ! ।
मैथुनं परमं द्रव्यं यतीनां परिकीर्त्तितम् ॥
अवधूताश्रमी यो हि तस्य वक्ष्ये विधिं शृणु ।
पौष्टिकादीनि सर्वाणि मद्यानि तस्य शाम्भवि ! ॥
मत्स्यं मांसं तस्य देवि ! जलभूचरखेचरम् ।
पूर्वोक्ता च भवेन्मुद्रा देवता सादरान्विता ॥
मातृयोनिं परित्यज्य मैथुनं सर्वयोनिषु ।
क्षतयोनिस्ताड़ितव्या अक्षतां नैव ताड़येत् ॥

अक्षतताताड़नाद्देवि ! सिद्धिहानिः प्रजायते ।
द्वादशाब्दाधिका योनिर्यावत् षष्टिः प्रजायते ॥
तावत्तु मैथुनं तस्या यावत्तु स्यात् स्वयम्भवा ।
अवधूतसमाचाराः शूद्रे सर्वाः प्रकीर्त्तिताः ॥
विशेषं मैथुने तस्य कथयामि शृणुष्व मे ।
ब्राह्मणीं क्षत्रियां वैश्यां त्यक्त्वा तु सर्वजातिषु ॥
मैथुनं प्रचरेद्धीमान् देवताभावचेष्टितम् ।
गृहमेधी भवेच्छूद्रो नान्याश्रमी भवेत् कदा ॥
शूद्रवदन्यजातीनामाचारोऽयं प्रकीर्त्तितः ।
गुरुवद्दे त्रिवर्णे तु तथा मातामहे कुले ॥
मैथुनं सुसमुद्दिष्ट मवधूताश्रमेऽपि च ।
काली तारा छिन्नमस्ता सुन्दरी भैरवी तथा ॥
मातङ्गी च तथा विद्या धूमावती तथा ।
एतासां साधकाचार श्चावधूतसमः स्मृतः ॥
सर्वाश्रमे सर्ववर्णे सर्वयोगे तथा शिवे ! ।
सर्वस्थानेषु सर्वत्र न विशेषं क्वचिद्भवेत् ॥
आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् ।
एवं विप्रो देवतायै स्वगात्ररुधिरं ददेत् ॥
शक्तिनाशविकारोऽस्ति स्वदेहरुधिरार्पणे ॥
तस्याभिव्यञ्जनं द्रव्यं दीयते कालयोगिभिः ।
शुद्ध्यादि सकलं देवि ! व्यञ्जकस्यापरार्द्धकम् ॥
केवलेनाद्ययोगेन साध्यः काल्याद्युपासकः ।
भैरवाय द्वियोगेन शिवत्वञ्च तृतीयकम् ॥
चतुर्थे सर्वसिद्धीश-श्चित्र-मेतन्नगात्मजे ! ।
परेण परतां गति मम तुल्यो न संशयः ॥
सेविते कुलतत्त्वे तु कुलतन्त्रसुदर्शिनः ।

जायन्ते न भैरवास्ते च वेशास्तत्समदर्शिनः ॥
तमःपरिवृतं वेश्म यथा दीपेन हन्यते ।
तथा मायावृते वृत्ते ज्ञानदीपेन दृश्यते ॥
निरस्तभेदवस्तु स्यान्मेध्यामेध्यादिवस्तुषु ।
जीवन्मुक्तो देहभावो देहान्ते क्षेममाप्नुयात् ॥
पीत्वा कुलरसं वीरो ब्रह्मध्यानमुपाश्रयेत् ।
ब्रह्मध्यानं महेशानि ! ब्रह्मनिर्वाणकारणम् ॥
तच्छृणुष्व महेशानि ! सारात्सारं परात्परम् ।
स्वकीयजीवदेहादि ब्रह्माण्डोऽनन्त एव च ॥
एवं हि सकलं देवि ! देहे महार्णवादि यत् ।
न चिन्तनीयं तत् सर्वं नास्तीति परिभावयेत् ॥
मातृस्थीयकं महातेजश्चैतन्यव्यापकं यथा ।
अहमेव जालरूपश्चाधारदेहवर्जितः ॥
आत्मानमपि देवेशि ! तदभेदेन चिन्तयेत् ।
ब्रह्मध्यानमिदं प्रोक्तमेतत् स्थिरतराय च ॥
सेवन्ते योगिनो द्रव्यं नान्यथा तु कदाचन ।
क्षणं ब्रह्माहमस्मीति यः कुर्य्यादात्मचिन्तनम् ॥
तत्र दद्यात् फलं देवो तस्यान्ते नैव गम्यते ।
मया वा ब्रह्मणा वापि विष्णुनपि कथञ्चन ॥
अतएव महेशानि ! नित्यकर्म न लोपयेत् ।
द्रव्याभावे महेशानि ! जलेनापि समाचरेत् ॥
अथवा मनसा नित्यं कुलयोगं समाचरेत् ।
वक्ष्येऽयुतविधिं भद्रे ! शृणुष्व कमलानने ! ॥
कुण्डल्या मिलनादिन्दोः स्रवते यत् परामृतम् ।
पिबेद्योगी महेशानि ! सत्यं सत्यं शिवः स्वयम् ॥
कुलयोगं महापानमिदमेव स्मृतं ध्रुवम् ।

पापपुण्यं पशुं हत्वा ज्ञानखड्गेन शाम्भवि ! ॥
परमात्मनि नयेच्चित्तं पलानीति निगद्यते ।
मनसा सेन्द्रियं सर्वं संयम्यात्मनि योजयेत् ॥
मत्स्याशी स भवेद्योगी मुक्तबन्ध स्तव प्रिये ! ।
अशेषब्रह्माण्डभाण्डं परब्रह्मणि संनयेत् ॥
परशक्त्यात्मसंयोगो न वीर्य्यं मैथुनं मतम् ।
एवं ते कथितं देवि ! सारात्सारं परात्परम् ॥
गोपनीयं गोपनीयं मम सर्वस्वसाधनम् ॥

इति श्रीयोगिनीतन्त्रे महातन्त्रराजे देवीश्वरसंवादे
चतुर्विंशतिसाहस्र्ये षष्ठः पटलः ।

---

## अथ सप्तमः पटलः ।

श्रीदेव्युवाच । नमस्तुभ्यं महादेव ! संसारार्णवतारक ! ।
जायाशेष ! जगन्नाथ ! भक्तवत्सल ! ईश्वर ! ॥
परमानन्दसन्दोह ! कारणानाञ्च कारण ! ।
दिव्यवीरप्रभेदेन श्रुतं योगद्वयं मया ॥
इदानीं श्रोतुमिच्छामि विद्यां स्वप्नावतीं शुभाम् ।
मृतसञ्जीवनीं विद्यां तथा मधुमतीमपि ।
आसफलं साधनञ्च वद मे परमेश्वर ! ॥

श्रीईश्वर उवाच ।

शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
ओं क्रीं स्वपुरावाहि कालि स्वप्ने कथयासुकस्यामुकं
देहि क्रीं स्वाहा ।
प्रणवं पूर्वमुद्धृत्य मायाबीजं तदन्तरम् ।

तदन्ते स्वप्नराबाहि कालि सम्बोधनद्वयम् ॥
स्वप्ने कथय तत्पश्चादमुकस्यामुकं ततः।
देहिपदात् कालीवीजमन्ते वह्निबधूस्तथा ॥
इयं स्वप्नावतीविद्या त्रैलोक्ये चातिदुर्लभा।
महाचमत्कारकरी महाकालेन भाषिता ॥
अष्टोत्तरशतं नित्यं जपेद्वर्षचतुष्टयम्।
ततः सिद्धा भवेद्विद्या स्वप्ने तिष्ठति नित्यशः ॥
स्वप्ने दर्शयते सर्वं यद्यन्मनसि कल्पते।
मृतसञ्जीवनीं विद्यामतः शृणु नगात्मजे! ॥
अमृतं वीजमाभाष्य मृतसञ्जीवनीति च।
स्वसन्धातं ततः पश्चान्मृतमुत्थापय द्वयम् ॥
हृहज्ञानुबधूमन्ते त्रैलोक्ये चापि विश्रुता।
सप्तमेयं महाविद्या सारात्सारतरं स्मृतम् ॥
नित्यमष्टोत्तरशतं जपमात्रेण शाम्भवि!।
सिद्धिदा सा भवेद्विद्या मृतसञ्जीवनी ततः ॥
कालालयं गतो यो वा चिताधूमागतोऽपि वा।
मन्त्रं जपन् स्पृशेच्छवं तदा देवि! वरानने! ॥
चिरजीवी भवेत् सत्यं नात्र कार्य्या विचारणा।
वक्ष्ये मधुमतीं विद्यां सर्वरञ्जनकारिणीम् ॥
श्रीमधुमति इत्युक्त्वा स्थावरजङ्गमाकर्षिणीति च।
ठ ठ स्वाहा महाविद्या वसुचन्द्राक्षरी परा।
त्रैलोक्याकर्षिणी विद्या प्रोक्तेयं देवदुर्लभा ॥
एकवर्षं जपेन्नित्यं शतमष्टोत्तरं नरः।
ततः सिद्धा महाविद्या सर्वज्ञानप्रकाशिनी ॥
आकर्षयेत् सुमेरुञ्च दिशः सागरमेव च।
नदीं रत्नानि च पुरीं स्त्रियः शैलान् वनस्थलीन् ॥

अलभ्यानि च द्रव्याणि पातालादिस्थितान्यपि ।
पुरस्थानञ्च वृत्तान्तं राज्ञाञ्च विद्विषामपि ॥
नक्तं तल्पश्वतजपात् सिद्धिं प्राप्नोति साधकः ॥
श्रीदेव्युवाच । देवदेव ! जगद्धाम ! प्रसीद सुमुख ! प्रभो ! ।
यत् पृष्टं यच्छ्रुतं नाथ ! श्रोतुमिच्छामि सम्प्रति ।
पद्मावतीमहाविद्यां सर्वविद्याविनोदिनीम् ॥
श्रीईश्वर उवाच ।
कथयामि वरारोहे ! विद्यां पद्मावतीं शुभाम् ।
प्रणवं पूर्वमुद्धृत्य मायाबीजं तदन्तरम् ॥
पद्मावतीपदं देवि ! सम्बुद्ध्यन्तं समुद्धरेत् ।
त्रैलोक्यवार्त्तामन्ते च कथय द्वन्द्वमुच्चरेत् ॥
स्वाहान्तेयं महाविद्या कथिता कल्पवल्लरी ।
अष्टोत्तरशतं नित्यं जपेद्वर्षद्वयं प्रिये ! ॥
ततः सिद्धा महाविद्या सर्वं वदति साधके ।
तल्पे स्थित्वा नक्तयोगी जपेत् मन्त्रं शताष्टकम् ॥
जगद्धितस्य वृत्तान्तं तज्जानाति दिने दिने ।
ब्रह्मविष्ण्वादिकानाञ्च त्रैलोक्यस्यापि शङ्करि ! ।
वृत्तान्तं कथयेत् स्वप्ने विद्या पद्मावती शुभा ॥
श्रीदेव्युवाच । श्रुतञ्च साधनं पुण्यं महाकालेन भाषितम् ।
इदानीं श्रोतुमिच्छामि वशीकरणमुत्तमम् ॥
अल्पसाध्यं महादेव ! द्रुतसिद्धिकरं महत् ॥
श्रीईश्वर उवाच ।
तवानुरोधाद्देवेशि ! कथयामि शृणुष्व तत् ।
पुरा ते कथितं देवि ! योगिनां ज्ञानसम्भवम् ! ॥
संक्षेपादधुना देवि ! विस्तरात् कथयामि ते ।
गोपितव्यं प्रयत्नेन सर्वदा पापसङ्कुले ॥

कुजवारे नक्षत्रयोगे अमायाञ्च तिथौ नरः।
शत्रुनाम लिखित्वा तु वामपादतले न्यसेत् ॥
तत्पादोपरि देवेशि! वाग्भवं प्रजपेत् सुधीः।
अष्टोत्तरशतं देवि! तदा वादी वशो भवेत् ॥
अतिमूको भवेच्छत्रुर्विवादे व्यवहारके।
तार्क्ष्यं दृष्ट्वा यथा सर्पो जड़ो भवति कामिनि! ॥
तथैव तत् समालोक्य जड़ो वादी न संशयः।
तथान्यत् संप्रवक्ष्यामि वशीकरणमुत्तमम् ॥
येन योगप्रभावेण भुवनं वशमानयेत्।
प्रणवं पूर्वमुद्धृत्य सुन्दरी भैरवी तथा ॥
योगिनीपदतो देवि! राजा प्रजा महारथी।
वशङ्करि तथा प्रोच्य अं इं उं ऋं तथा वदेत् ॥
षड्विंशत्यक्षरो मन्त्रः कथितः कल्पपादपः।
अनेन मनुना देवि! तैलञ्च चन्दनञ्च वा ॥
शताष्टजप्तं तत्तैलं मुखे दद्यात् वरानने!।
तच्चन्दनेन तिलकं भाले दद्यान्नगात्मजे! ॥
जगद्वश्यक्रियामेतां कृत्वा साधकसत्तमः।
चेत्तु पश्यति यं देवि! स वश्यो नात्र संशयः ॥
एवमेव विधानेन देवेन्द्रमपि मोहयेत्।
किं पुनर्मानवान् देवि! सार्वभौमान् नराधिपान् ॥
अथोच्यते महादेवि! वशीकरणमुत्तमम्।
सर्वेषां जगतां देवि! मोहनं परमाद्भुतम् ॥
मन्त्रमादौ प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम्।
प्रणवं पूर्वमुद्धृत्य वदेद्राजमुखीपदम् ॥
पुनाराजमुखी प्रोच्य मायाबीजद्वयं वदेत्।
कामबीजं ततः पश्चाद्देवी देवीद्वयं द्वयम् ॥

महादेवीपदं पश्चाद्देवि ! देवाधिदेवीच ।
सम्बोधनान्तं देवेशि ! पदमेतच्चतुष्टयम् ॥
सर्वजनस्याभिमुखं मम वश्यं कुरु कुर्विति ।
स्वाहान्तोऽयं महामन्त्रः सर्ववश्यप्रदो महान् ॥
इति मन्त्रेण शय्यास्थः प्रातःकाले महेश्वरि ! ।
त्रिवारं दत्तहस्तेन मुखं संमार्जयेत् कृती ॥
एवन्तु प्रत्यहं कुर्य्याज्जगद्वश्याय कामिनि ! ।
अवश्यं जायते वश्यं जगदेतच्चराचरम् ॥
श्रीदेव्युवाच । श्रुतमेतत् महादेव ! त्वत्प्रसादात् पुरातनम् ।
स्वप्नावती च या विद्या कथितावगता मया ॥
इदानीं श्रोतुमिच्छामि विशेषं तत्र यद्भवेत् ।
तद्वदस्व महादेव ! यदि तेऽनुग्रहो मयि ॥

श्रीईश्वर उवाच ।

कथयामि शृणु प्राज्ञि ! विद्यां स्वप्नावतीं पराम् ।
प्रणवं पूर्वमुद्धृत्य बधूबीजं समुद्धरेत् ॥
मायाबीजं ततः स्वाहा मन्त्रमेतत् नगात्मजे ! ।
दिवा भुक्त्वा हविष्यान्नं रात्रौ जप्त्वा सहस्रकम् ॥
ततः शुद्धायां शय्यायां तदा स्वप्ने हि पश्यति ।
मनसा चिन्तितं यद्यत् तत् सर्वं परमेश्वरि ! ॥
अथापरं प्रवक्ष्यामि स्वप्नप्रबोधमुत्तमम् ।
येन विज्ञानमात्रेण सर्वं जानाति निश्चितम् ॥
प्रणवं प्राक् समुच्चार्य्य िलि क्रूं शूलपाणये ।
स्वाहान्तोऽयं महामन्त्रः प्रोक्तस्ते कमलेक्षणे ! ।
विधानं पूर्ववत् सर्वं जपान्ते प्रार्थनं शृणु ॥
ओं नमो जगत्त्रिनेत्राय पिङ्गलाय महात्मने ।
वामदेवसुरूपाय स्वप्नाधिपतये नमः ॥

स्वप्ने कथय मे तत्त्वं सर्वं कार्य्यं शुभाशुभम्।
इति मन्त्रं संप्रार्थ्य सर्वं जानाति भावतः॥
एतत्ते कथितं देवि! स्वप्नबोधमनुत्तमम्।
रहस्यं परमं रम्यं वशीकरणमुत्तमम्॥
सर्वमेतत् महादेवि! सर्वज्ञानप्रदायकम्।
निरन्तरं महादेवि! सेवितः सिद्धशङ्करैः॥
मधुमत्याः प्रसादेन सर्वोक्तं सर्वयोनिषु।
याचन्तं परमेशानि! तस्मात्त्वां समुपाश्रयेत्॥
स्वप्नावत्यादिविद्याया यो जपः कथितः प्रिये!।
वर्षसंख्याक्रमेणैव सिद्धिकामाश्च शाम्भवि!॥
त्वां जपन्तु ततो देवि! फलसिद्धिः समीरिता।
सिद्धविद्याप्रभावेण स्युः सुसिद्धाः सुरासुराः॥
इति ते कथितं सम्यग्रहस्यं परमाद्भुतम्।
गोपनीयं खले दुष्टे पशुपामरसन्निधौ॥
अन्यथा कुरुते यस्तु स भक्ष्यो डाकिणीगणैः।
तस्मात् सर्वप्रयत्नेन गोपनीयं विशेषतः॥
दद्याच्छान्ताय दान्ताय सत्कुलीनाय योगिने।
भक्ताय पापहीनाय साधकाय महात्मने॥

इति योगिनीतन्त्रे महातन्त्रराजे देवीश्वरसंवादे
चतुर्विंशतिसाहस्रेय सप्तमः पटलः।

---

## अथ अष्टमः पटलः।

श्रीदेव्युवाच। श्रुतं हि साधनं सर्वं त्वन्मुखाम्भोजनिर्गतम्।
देवदानवगन्धर्वसिद्धचारणसेवितम्॥
परमानन्दसन्दोहं सानन्दाद्विविभूतिदम्।

परं पारं परं पुण्यं पवित्रं परमं महत् ॥
योगिन्युत्पत्तिकथनं त्रैलोक्यस्यापि दुर्लभम् ।
कथयस्व महादेव ! केवलानन्दद्दितम् ॥

ईश्वर उवाच ।

पूर्वं यदावयोर्वृत्तं सर्वं तद्विस्मृतम् शिवे ! ।
अत्यन्तगुह्यं परमं देवासुरभयङ्करम् ॥
प्राचीनमतिगोप्यं हि सारात्सारं परात्परम् ।
शृणु वच्यामि चार्वङ्गि ! समासेन शिवप्रिये ! ॥
गोपनीयं त्वया भद्रे ! योनिः परनरे यथा ।
ब्रह्माण्डस्यायुषः शेषे सर्वसत्त्वविवर्जितम् ॥
भूम्यादिपञ्चतत्त्वे तु केवले संस्थिता शिवे ! ।
त्वां मां विना महेशानि ! नासीत् किञ्चिज्जगत्त्रये ॥
एतस्मिन्नन्तरे त्वां वै पप्रच्छाहं प्रहासतः ।
ममाधिका योग्यता वा तवापि वा महेश्वरि ! ॥
इदानीं परमेशानि ! नभोब्रह्माण्डमण्डले ।
स्थातुं स्थानं न कुत्रास्ति कुत्र स्थास्यामि भाविनि ! ॥
यद्यन्मया कृतं सर्वं तत् सर्वं गतमेव हि ।
विविक्तोऽहं सदा दिव्ये भवसंसारकर्मणि ॥
स्थातुं स्थानमिदानीं त्वं कल्पयस्व महेश्वरि ! ।
इति श्रुत्वा तदा देवी क्रोधेनारुणलोचना ॥
उवाच मां सुनिष्ठुरं दुराचारादिदारुणा ।
यद्यत् कृतं त्वया देव ! मामुपाश्रित्य सर्वदा ॥
मां विना ते महादेव ! शवत्वमिति निश्चितम् ।
योगे हिते महेशानि ! मया सर्वमिदं ततम् ॥
कल्पितं वह्निरूपेण योग्यता का तवास्ति ते ।
कारणावस्थयापन्ना सदाहं धातुरूपिणी ॥

न कार्य्यं नैव यत् किञ्चित् वह्नौ वाहं चरं परम्।
कार्य्यभावसमापन्ना सदा प्रकृतिरूपिणी॥
तदा ब्रह्मादयः सर्वे सर्वेऽप्याविर्भवन्ति हि।
मम मायामयमिदं विश्वं देवचराचरम्॥
विक्षेपावरणे मासारम्भो मे परमेश्वर!।
इति श्रुत्वा वचस्तेऽहं वज्रतुल्यं सुदारुणम्॥
नोवाच किञ्चित्तां देवीं स्थिरत्वमभवत्तदा।
वारितोऽहं सदा देवि! दुःखेनान्तरजेन च॥
ततः स्थिरीकृत्य हृदि उपायं तव निग्रहे।
जगाम पश्चिमे भागे ब्रह्माण्डस्य वरानने!॥
गत्वा तत्र महादेवि! निर्जने दारुणं पुरः।
स्वदेहभस्मना दैत्यं प्रागदृष्टं श्रुतं तथा॥
दानवेन्द्रं महाघोरं घोरनामानमद्भुतम्।
कोटियोजनविस्तीर्णं द्वात्रिंशल्लक्षप्रस्थितम्॥
कोटिहस्तं महारौद्रं कोटिलोचनमुज्ज्वलम्।
पञ्चाशल्लक्षवदनं ज्वालावलिसमाकुलम्॥
तस्मै दत्त्वा महासिद्धीरणिमाद्या महेश्वरि!।
सर्वभावैर्मत्सदृशं विधाय तं सुदारुणम्॥
उल्लासमनसा देवि! आगतोऽहं तवान्तिकम्।
सोऽपि तस्थौ दानवेन्द्रः शय्यां कृत्वा जलार्णवे॥
गेण्डुके द्वे विधायैव सुवेलवेलपर्वतौ।
तदा मम मनो ज्ञात्वा त्वमवादीश्च मां प्रति॥
इदानीं ब्रह्माण्डभाण्डं जीवहीनं प्रजायते।
आज्ञापय महादेव! पश्यामि सकलं शिव!॥
तदा विहस्य मनसा तवोत्कण्ठाञ्च वर्द्धयन्।
उवाच त्वामहं भद्रे! आगच्छ पश्चिमां दिशम्॥

सर्वत्रान्यत्र देवेशि ! दृष्ट्वा पश्चाद् द्रुतं मयि ।
स्त्रीणां स्वभावो देवेशि ! य एवाधः स्थितो भवेत् ॥
तत्रैव महती श्रद्धा दृष्ट्वा ज्ञातुं सदा भवेत् ।
इति ज्ञात्वा मयोक्तं तन्निषेधवचनं शिवे ! ॥
ततः प्रयोजनाभावात् तव स्वभावतः शिवे ! ।
न गतान्यत्र देवेशि ! मम च प्रत्यगन्तिके ॥
महद्ग्रामे च कान्तारे तत्र केदारकेश्वरः ।
तत्र गत्वा महादेवी जगन्मोहनकारिणी ॥
विव्याध दैत्यराजेन्द्रं कामवाणान् सहस्रशः ।
अत उत्थाय दैत्येन्द्रः कामवाणेन विह्वलः ॥
करान् प्रसार्य्य सकलान् आह चाटुवचो भृशम् ॥
घोर उवाच। क्रोड़े मे त्वं समागच्छ भव सर्वेश्वरी मुदा।
त्राहि मां कामजलधौ निमग्नं स्वाङ्गदानतः ॥
कञ्चित् कालं न जीवामि त्वां विनाहं कथञ्चन ।
आलिङ्ग्य पतिभावेन जीवनं रक्ष सुन्दरि ! ॥
इत्यादि चाटुवाक्यैस्त्वां मुहुर्मुहु र्जगाद च ।
ततः सा त्वमवादीश्च सकटाक्षं शुचिस्मितम् ॥

श्रीदेव्युवाच ।

त्वं सर्वदैत्येन्द्रः सर्वभोक्ता त्वं वै बली देवनिकाय एव ।
त्वं वीर्य्यवान् सर्वविनाशनश्च त्वां वै वरामो यदि तत् करोषि।
मदीयवृत्तान्तमिह शृणुष्व नावस्थितिः क्वापि भवेन्न यस्मात्।
पुरा प्रतिज्ञा हि मया कृता या तां पालय त्वं यदि मां ग्रहीतुम्।
मनस्तु चैवं खलु दैत्यराज ! यो मां विनिर्जित्य रणे स्थितः स्यात्
स मे हि भर्त्ता न चान्य एव तदादितो युद्धमितः श्रयस्व ॥

ईश्वर उवाच ।

एवं ब्रुवाणां त्वां देवि ! क्रोधेन महता वत ।

उच्चैर्निर्भर्त्सयामास प्रलयाम्भोधिघर्घरम्॥
ततः समुत्थितो घोरः कालरुद्रश्च न्यक्कृतः।
समाहर्त्तुं तदा दैत्यो धावतिस्माखिलं जगत्॥
तथापि त्वां गृहीतुं स क्षमो नाभूत् कथञ्चन।
तदा बोधेन महता जम्भा च दानवेश्वरः॥
हस्तामर्षवशात्ते च पर्वताः सूक्ष्मतां गताः।
पादाघातादुपरता मग्नाश्चैव जलार्णवे॥
तद्बहुभ्रमवातेन प्रोच्छलज्जलमण्डलम्।
ऊर्द्ध्वाधश्च कटाहान्तं महाभीमतरङ्गकम्॥
ब्रह्माण्डं परिसंव्याप्य भ्रमति स निरन्तरम्।
धर्त्तुं कामो महामायां तां धर्त्तुं न क्षमोऽभवत्॥
अग्रेऽग्रे त्वां पश्यतिस्म केवलं देवपुङ्गवः।
यद्यद्युद्धं कृतं तेन कथितुं नैव शक्यते॥
यद्यत् क्षिप्तं त्वयि शिवे! तत् सर्वं भस्मसाद्गतम्।
यत्तेजसा महेशानि! तत्रापि क्रोधमूर्च्छितः॥
अभून्निरन्तरं दैत्यो घोरो घोरपराक्रमः।
आश्चर्य्यं शृणु देवेशि! युद्धवृत्तं महोज्ज्वलम्॥
जलजातात् कटाहात्तु बुद्धिरुत्पद्यते भृशम्।
एवमेकाहतो युद्धं कोटिवर्षमभूत् तदा॥
दिव्यं तत्र महेशानि! युद्धकाले भयातुरः।
अहं योगं समाश्रित्य सूक्ष्मसूक्ष्मतरं वपुः॥
विधाय परमेशानि! त्वामाश्रित्य स्थितः सदा।
कथञ्चिदपि न प्राप्य त्वां धर्त्तुं दैत्यराट् तदा॥
चिन्तयामास च खलु त्वां हन्तुं विविधक्रमम्।
वर्द्धयित्वा शरीरं स्वं घर्षयित्वा च बाहुना।
कटाहे मारयिष्यामि महादुष्टं च त्वामहम्।

इति सञ्चिन्त्य मनसा वर्द्धयित्वा कलेवरम् ॥
पूरितं तेन ब्रह्माण्डं घोरो हर्षमुपागमत् ।
उवाच त्वां तदा दैत्यः हता यास्यसि कुत्र वा ॥
भवती भृशमालोक्य दैत्यं ब्रह्माण्डपूरितम् ।
त्वयोक्तोऽसौ घोरदैत्यस्तिष्ठ तिष्ठ सुदुर्मते ! ॥
कथं व्यस्तो भवान् जातो निहन्मि त्वामहं मुदा ।
अधुनैव महादुष्ट ! जानासि न हि मां कदा ॥
मत्तः सृष्टिः समुत्पन्ना मय्येव प्रविलीयते ।
मयैव पाल्यते सर्वं मम मायामयं जगत् ॥
मत्तो नान्यत् किञ्चिदस्ति ब्रह्मैवाहं सनातनः ।
शृणु मूढ़वरास्माकं परमं मङ्गलं महत् ॥
दुष्टभावेन वा दैत्य ! शिष्टभावेन वा पुनः ।
भजन्ते मां यथा यो हि तथा कामं ददामि ते ॥
निदानन्तु प्रयच्छामि महाफल मनुत्तमम् ।
त्वयाहं सेविता दैत्य ! बहुकालं न संशयः ॥
ममास्ति मेकचित्तेन ममेहा त्वकरोद्द्यतः ।
शिवोऽसि नात्र सन्देहो मत्कृते यद्भ्रमस्तव ॥
इदानीं पश्य मद्रूपं ब्रह्मानन्दं परं पदम् ।
यद्दृष्टवान् पुनः कोऽपि कदाप्याविर्भवेत् किल ॥
ध्यात्वा यत् परमं रूपं शिवं न्यूनमिति प्रभो ! ।
तद्रूपं परमं धाम कालीरूपमिति शृणु ॥
इतःपरतरं रूपं ब्रह्मणो नास्ति कुत्रचित् ।
इत्युक्त्वाहं तदा देवि ! भवानी भवमोचनी ॥
ध्यात्वा यत् परमं रूपम् अहं कालीति वादिनी ।
असकृत् परमेशानि ! जाता त्वं कालिका तदा ॥
कृष्णवर्णा महाघोरा महाकालोपरिस्थिता ।

मुण्डमालावलीरम्या मुक्तकेशी स्मितानना ॥
लोलजिह्वा रक्तघोरलोचनत्रयराजिता ।
अमाकलासमुल्लासा किरीटोज्ज्वलविग्रहा ॥
शिवाकोटिसहस्रैस्तु तेजोमण्डलसम्भवैः ।
महारावैश्चतुर्दिक्षु याता घोरपराक्रमैः ॥
रश्मिवृन्दसमुद्भूता योगिन्यः कोटिकोटिशः ।
समन्ताद् घोररूपस्था महायुद्धमहोत्सुकाः ॥
प्रतिलोमकूपमध्ये ब्रह्माण्डं कोटिकोटिशः ।
भासन्ते सततं देवि ! सर्वाः सूर्य्यमयाः पुनः ॥
एवं तां कालिकां दृष्ट्वा मूर्च्छितो दानवेश्वरः ।
प्रतीतोऽसौ महाकाल्या दृष्ट्वा श्रीमुखमण्डलम् ॥
तत्क्षणाद्दानवाधीशो ब्रह्मज्ञानमवाप्तवान् ।
ततस्तं दानवाधीशं ज्ञाने भक्तं सुनिर्म्मलम् ॥
जिह्वया लोलया काली कर्त्तयिष्ये रणान्तरे ।
ब्रह्माण्डसहितं माता चर्वयित्वा मृता क्षणात् ॥
चकार लीलया काली घोरवाद्यमहोत्सुका ।
नानायन्त्रस्य वृहतः पताका व्यापिका सदा ॥

इति योगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्रे अष्टमः पटलः ।

---

## अथ नवमः पटलः ।

ईश्वर उवाच ।

तदृदृष्ट्वा तु महाश्चर्य्यं भयविह्वलमानसः ।
अहं जगाम सहसा तत्र कान्तारमुत्तमम् ॥
सुषुम्नावर्त्मना देवि ! तत्र गत्वा मया किल ।

संदृष्टञ्च श्रुतं यद्यत् कथितुं नैव शक्यते ॥
सर्वाश्चर्य्यमयं देवि ! न दृष्टं न श्रुतं क्वचित् ।
अतीव वृहदाकारा: ब्रह्माण्डा: कोटिकोटिश: ॥
चरन्ति सर्वदा देवि ! क: संख्यातुं क्षमो भवेत् ।
कोटिकोटिमुखा देवि ! कोटिकोटिभुजा स्तथा ।
एवञ्च विविधाकारा ब्रह्मविष्णुशिवादय: ॥
महदैश्वर्य्यसम्पन्ना: प्रतिब्रह्माण्डवासिन: ।
सर्वाश्चर्य्यमयं देवि ! दृष्ट्वा क्षुभ्रलमानस: ॥
सर्वं मे विस्मृतं जातं कोऽहं चिन्तापरायण: ।
अहं क: कुत्र आयात: को न पृच्छति कुत्रचित् ॥
एवं नानाविधं देवि ! भुवने विस्मृत: सदा ।
नानास्थानसम्भ्रमञ्च स्थैर्य्यञ्च नास्ति मे कदा ॥
ततश्च कोटिवर्षान्ते प्राप्तं ते हृदयाम्बुजम् ।
तत्र गत्वा मया सर्वं दृष्टमाश्चर्य्यसुन्दरम् ॥
तत् सर्वं परमेशानि ! कथितुं नैव शक्यते ।
यद्धर्मार्थोदयं शास्त्रं कारणं सुखमोक्षयो: ॥
परमात्मागमो वेदा जीवो दर्शनमिन्द्रिय: ।
देह: पुराणमङ्गानि स्मृतयो यानि यानि च ॥
तत्रैव शर्वशास्त्राणि लोमादीनि वरानने ! ।
जीवात्मनो यथा भेद स्तथा वेदागमेष्वपि ॥
पत्राग्रे पत्रमध्ये च पत्रान्ते हृदयाम्बुजे ।
दृष्टा वर्णावली यातु तीव्रतेजोमयी शुभा ॥
शिक्षा कल्पो व्याकरणं निरुक्तम्छन्द एव वा ।
अन्यानि सर्वशास्त्राणि क्षुद्राणि यानि कानि च ॥
किन्तु पूर्वं जलालोके जातोऽहं कथितं तव ।
ततो मया शतं देवि ! कर्णिकान्तर्गतोज्ज्वलम् ॥

कोटिकोटिदिवानाथनिशानाथसमुज्ज्वलम् ।
कोटिकोटिमहावह्नितेजोमण्डलमण्डितम् ॥
तन्मध्ये तु मया दृष्टं वर्णपुञ्जं महोज्ज्वलम् ।
सूर्य्यकोटिसमाभासं चन्द्रकोटिसुशीतलम् ॥
वह्निकोटिमहोज्ज्वलं परं ब्रह्ममयं ध्रुवम् ॥
सर्वज्ञानमयं देवि ! सर्वाश्चर्य्यमयं सदा ।
सर्वयज्ञमयं देवि ! सर्वतीर्थमयं सदा ॥
सर्वपुण्यमयं देवि ! सर्वधर्ममयं तथा ।
ब्रह्मज्ञानमयं देवि ! ब्रह्मानन्दमयं तथा ॥
प्रमाणं सर्वशास्त्राणां वेदादीनां महेश्वरि ! ।
प्रमाणं सर्वसत्त्वानां ब्रह्मतेजः परं हितम् ॥
सर्वमायावहिर्भूतं सर्वमायानिकृन्तनम् ।
सर्वानन्दमयं देवि ! ब्रह्मानन्दमयं सदा ॥
पूर्णानन्दमयं देवि ! ब्रह्मनिर्वाणमुत्तमम् ।
सर्वमायामयं देवि ! सर्वविद्यामयं पुनः ॥
सर्वतपोमयं देवि ! सर्वसिद्धिमयं तथा ।
सर्वमुक्तिमयं देवि ! सर्ववेदमयं तथा ॥
सर्वलोकमयं देवि ! सर्वभोगमयं तथा ।
सर्वशास्त्रमयं देवि ! सर्वयोगमयं तथा ॥
दृष्टागममिमं तत्र मम ज्ञानाब्धिसागरे ।
गतशर्व्य्यथोऽद्राच्च यथा सूर्य्योदयोज्ज्वलम् ॥
अभ्यस्तं हि मया सर्वं महाकालीप्रसादतः ।
दृष्टाभ्यस्तं मया सर्वं तत्क्षणान्नात्र संशयः ।
ततः किञ्जल्कपुञ्जेषु गत्वा दृष्टं मया किल ॥
वर्णपुञ्जमयं देवि ! सूर्य्यकान्तिसमप्रभम् ।
न्यायोमीमांसकं सांख्यं पातञ्जलं तथा पुनः ॥

वैशेषिकं तथा पूर्वं मया ज्ञातं हि तत्क्षणात् ।
ततो वर्णावलीं दृष्ट्वा कर्णिकाप्रान्तदेशतः ॥
शतसूर्य्यसमाभासा सर्वरञ्जनकारिणी ।
आयुर्वेदभिषग्वेदा मयाभ्यस्ता स्तदैव हि ॥
तदन्तरे महादेवि ! दृष्ट्वा वर्णावलीं शुभाम् ।
सहस्रादित्यसङ्काशा शूद्रवर्णा महोज्ज्वला ॥
स्मृतीतिहासौ देवेशि ! पुराणानि मया पुनः ।
मयाभ्यस्तं हि तत् सर्वं तत्क्षणान्नात्र संशयः ॥
तथापि भ्रमदेहो मे न शुध्यति कदाचन ।
तदन्तरे मया दृष्टं सूर्य्यकोटिसमप्रभम् ॥
ब्रह्मज्ञानं मया देवि ! ब्रह्मतेजःपरीवृतम् ।
वेदान्तमिति विख्यातं वर्णपुञ्जमहाप्रभम् ॥
मयाभ्यस्तं तत्क्षणात्तन्महदेभ्यश्च मोहतः ।
तदन्तरे मया दृष्टं वर्णपुञ्जसमुज्ज्वलम् ॥
कोटिसूर्य्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
सर्वज्ञानमयं देवि ! सर्वतीर्थमयं सदा ॥
सर्वयज्ञमयं देवि ! सर्वधर्ममयं तथा ।
प्रमाणं सर्वसत्त्वानां शास्त्रादीनां महेश्वरि ! ॥
वेदचतुष्टयं सामाथर्वऋग्यजुरुत्तमम् ।
मयाभ्यस्तं हि तत् सर्वं तत्क्षणान्नात्र संशयः ॥
तथापि न च तृप्तिर्मे जायते न च तत्क्षणात् ।
सर्वज्ञानसर्वतत्त्वसर्वसिद्धिक्रियोऽप्यहम् ॥
तदा नमस्कृतां देवि ! ते स्वां कालीं सनातनीम् ।
शिवाभिर्योगिनीभिश्च नृत्यन्तीं ब्रह्मरूपिणीम् ॥
स्मित्वा स्मित्वा हंसमुखे मे दृष्ट्वा श्रीमुखमण्डलम् ।
तत उड्डीनमासाद्य हृद्दले त्वागतं मया ॥

आज्ञाचक्रे भ्रुवोर्मध्ये महाकाल्या महेश्वरि ! ।
तदा मम स्मृतिर्जाता ब्रह्मविष्णुकृते पुनः ॥
तन्नृत्यसमये काल्या द्वयोश्चिवुकयोः स्थितौ ।
च्युतौ स्वेदौ महेशानि ! ताभ्यां जातौ गुणोचितौ ॥
ब्रह्मा विष्णुश्च तौ दृष्ट्वा भयकम्पितविग्रहौ ।
तदा तौ च गतौ तूर्णं नासिकारन्ध्रयोर्द्वयोः ॥
काल्यास्तदागतो धाता पिङ्गलायां महेश्वरि ! ।
ईड़ायाञ्च ततो विष्णु स्तत्र गत्वा च तौ शुभौ ॥
महाविड़म्बितौ भूतौ दृष्ट्वाश्चर्य्यमनेकशः ।
रुदन्तौ सततं देवि ! विस्मृतं किं भविष्यति ॥
एवमादि रुदन्तौ तौ गच्छन्तौ च इतस्ततः ।
तावीश्वरौ महेशानि ! महादुःखेन दुःखितौ ॥
ज्ञात्वा मया महेशानि । प्रागतं विष्णुमन्दिरम् ।
तस्मै दत्तं मया ज्ञानं मन्त्रं परममङ्गलम् ॥
तत्क्षणान्मम तुल्योऽसौ वामाङ्गे केवलो मम ।
तस्मै दत्तं सर्वशास्त्रं वाङ्मात्रेणागमं विना ॥
गरुड़स्थो महाविष्णुर्हृष्टपुष्टो बभूव ह ।
तमादाय गतस्तत्र ब्रह्माण्डे परमेश्वरः ॥
गत्वा तस्मै मया दत्तं मन्त्रं परममङ्गलम् ।
महाज्ञानी महादेवि ! तत्क्षणात् स पितामहः ॥
मम तुल्यो जायतेऽसौ दक्षाङ्गे मम केवलः ।
स विधिः परमेशानि ! मम शासनतस्तदा ॥
दत्तं तस्मै सर्वशास्त्रं विशारदञ्च विष्णुना ।
गतव्यथ स्तदा ब्रह्मा हृष्टः पुष्टः सदैव हि ॥
अत आदिगुरुस्त्वं हि वर्त्तसे मम सर्वदा ।
तदङ्गीकृत्य तज्ज्ञानं सह ताभ्यां महेश्वरि ! ॥

परं काल्या मया यातं तेन तेन पथा तथा ।
शिवाभिर्योगिनीभिश्च महान्टत्यपरायणा ॥
शतकोटिदिव्यवर्षं नृत्यतिस्म परात्मिका ।
नानावाद्यमहोल्लासा नानालङ्कारगाथिका ॥
चन्द्रसूर्य्यवह्निसोम्यैर्विचित्रैश्च प्रसूनकैः ।
उत्थितैः पतितैः पुष्पैर्दिव्यगन्धैर्महोत्सका ॥
वीक्षणागोचरैर्देवि ! सदान्टत्यपरैः रहः ।
शतशो ब्रह्माण्डसमा पताकाभिश्च रञ्जिता ॥
विचित्राभिश्च बहुभिर्दृष्टा क्रान्ताभिरेव च ।
अतस्तोतुं समारब्धा वयं कालीं करालिकाम् ॥
साश्रुपुलकगद्गदोक्त्या नतशीर्षाः पुटैः करैः ।
तदादौ विधिरस्तौषीत् सर्वशास्त्रेण भक्तितः ॥
कोटिवर्षं महेशानि ! तमुवाच तदा परा ।
यद्गुणस्त्वमहो धातः ! सर्वशास्त्रार्थविस्मृतः ॥
अनुसन्धानवेत्तासि सृजकस्त्वं सदा भव ।
इत्याज्ञप्त स्ततो धाता कृतकृत्योऽभवत्तदा ॥
ततोऽस्तौषीन्महाविष्णुः सर्ववेदेन शाम्भवि ! ।
दशकोव्ययनानाञ्च ततस्तमब्रवीच्छिवा ॥
वेदज्ञोऽसि महाविष्णो ! मन्त्रज्ञोऽसि गुणालयः ।
धर्मज्ञोऽसि पालकस्त्वं भव सृष्टेश्च रक्षकः ॥
इत्याज्ञाञ्च शिरे कृत्वा कृतार्थोऽसौ जगद्धितः ।
ततोऽहं परमां नित्यां कालीं ब्रह्मसनातनीम् ॥
तुष्टाव परया भक्त्या आगमेन महेश्वरि ! ।
विंशकोटिवत्सराणां मामुवाच तदा तु सा ॥
काल्युवाच । आत्मज्ञो महाप्राज्ञो निर्मायोऽसि सदाशिव !
सगुणस्त्वं महायोगी सृष्टिसंहारको भव ॥

एवमाज्ञां शिरे कृत्वा पुनस्तुष्टाव तामहम् ।
पञ्चकोटिदिव्यवर्षं मामुवाच ततस्तु सा ॥
आगमैः संस्तुता तेऽहं तुष्टा तेऽस्मि सदाशिव ! ।
किं प्रार्थ्यते महादेव ! ददामि नात्र संशयः ॥

ईश्वर उवाच ।

तिष्ठामि सततं मात स्त्वदीयचरणाम्बुजे ॥

श्रीकाल्युवाच ।

घोरनाम्ना दानवेन यादृग्युद्धं कृतं मया ।
तत्कोटिकोट्यंशयुद्धं करिष्यत्येव यो मया ॥
महिषीगर्भसंभूत स्तव रेतःसमुद्भवः ।
भविष्यसि त्वं देवेश ! महिषासुरनामधृक् ॥
आसुरं भावमासाद्य महायुद्धं करिष्यसि ।
तदा त्वां नाशयित्वाहं भद्रकालीस्वरूपतः ॥
वामाङ्गुष्ठं पदाब्जस्य स्थापयिष्यामि ते हृदि ।
इदानीं त्वं महादेव ! मम पादतले सदा ॥
तिष्ठ त्वं शवरूपेण मम चासनतां व्रज ।
इत्याज्ञप्ता वयं देव्याः पतिताः पदसन्निधौ ॥
दण्डवत्प्रणिपातेन लक्षवर्षं गतं तदा ।
तत्रैवान्तरगात् काली चिद्रूपा ब्रह्मनिष्कला ॥
इत्येवं कथितं तुभ्यं योगिन्युत्पत्तिविस्तरम् ।
गोपनीयं प्रयत्नेन सर्वेषां साधनोत्तमम् ॥

इति योगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्रे नवमः पटलः ।

# अथ दशमः पटलः ।

ईश्वर उवाच ।

उत्थाय च पुनर्देवि ! न त्वां दृष्ट्वा वयं पुनः ।
वदन्तो भृशदुःखार्त्ता निमग्नाः शोकसागरे ॥
हा मातस्ते मुखाम्भोजं कोटिचन्द्रार्कन्यक्कृतम् ।
कीदृक् चरणरागं ते कृपासागरसञ्चयम् ॥
विस्तृतं परमं रूपं महामायाविमोहनम् ।
किंभूतं नखचन्द्राणां ज्योतिः परममङ्गलम् ॥
कोटिकोटिनिशानाथविगलन्मुखमण्डलम् ।
किंभूतं किं भवेन्मातः ! क्व यातमिदमद्भुतम् ॥
हाहा मातरिदं रूपं सच्चिदानन्दमव्ययम् ।
अस्माकं मातृभावेन न पश्यामः पुनश्च तत् ॥
मातृतातविहीनाश्च भ्रमन्ति वालका यथा ।
रुदित्वा च रुदित्वा च वयं सर्वे तथा स्थिताः ॥
इत्यादि विविधैर्देवि ! विलापैः परमेश्वरि ! ।
नीता वयं पञ्चलक्षं वर्षाणामम्बुजेक्षणे ! ॥
रुदित्वा पुनरुत्थाय रुदन्तो भृशमुच्चकैः ।
मातर्मातः ! क्व याता त्वम् अस्माकं किं भविष्यति ॥
वयन्ते कथमुत्पाद्य निःक्षिप्ता दुस्तरार्णवे ।
दया नास्ति अहो मातर्वयन्ते दीनवालकाः ॥
न पालयसि चेदस्मान् को वास्मान् पालयिष्यति ।
त्वां विना जननी नास्ति नास्माकं भाव एव च ॥
त्वामदृष्ट्वा मरिष्यामः सत्यमेव सुनिश्चितम् ।
मातृतातविहीनस्य वालकस्य च जीवनम् ॥
कथं भवति हे मातर्ज्ञायतां स्वयमेव हि ।

निरुत्सुका चिदस्माकं कृपां तस्यां ततः कुरु ।
सोवाच योगिनी वाणीं महामृतप्रवर्षिणीम् ॥

श्रीकाल्युवाच ।

मा भयार्त्ता महेशान ! ब्रह्मविष्णुमहेश्वराः ।
तिष्ठामि सततं तेषामित्याह खलु सा तदा ॥
सच्चिदानन्दरूपाहं ब्रह्मैवाहं स्फुरत्प्रभम् ।
मम नाशो नास्ति कदा निःसन्देहास्तु तिष्ठत ॥
यद्रूपं दृष्टमस्माकं युष्माभिः परमं मतम् ।
ध्यात्वा तद्रूप ममलं जपं कुरुत मे मनुम् ॥
तदेव मङ्गलं तुभ्यं भविष्यति महाप्रभम् ।
इदानीं ब्रह्मणो देहे विश विष्णो ! स्थिरोभव ॥
अहो महेश ! देवेश ! ब्रह्मदेहे प्रविश्यताम् ।
यावत् सृष्टिं करोतीश इमां ज्ञानक्रियामयीम् ॥

ईश्वर उवाच ।

इत्युक्त्वा सा महाकाली ददावस्मासु शाम्भवि ! ।
इच्छाज्ञानक्रियाशक्तीः सर्वकार्य्यार्थसाधनीः ॥
इच्छा तु विष्णवे दत्ता क्रियाशक्तिस्तु ब्रह्मणे ।
मह्यं दत्ता ज्ञानशक्तिः सर्वशक्तिस्वरूपिणी ॥
तदोवाच महाकाली शृणुध्वं परमेश्वराः ! ।
अहं विशामि युष्मासु पूर्णरूपेण शङ्करे ॥
अयमेव गुरुर्देवः श्रीशिवः परमेश्वरः ।
अयं हि वक्ता शास्त्राणां नाप्यन्योऽपि विधिर्हरिः ॥
श्रोत्री याहं हि युष्माकं सर्वेषां नात्र संशयः ।
मोहयिष्यामि ब्रह्माणं विष्णुं वापि महेश्वरम् ॥

ईश्वर उवाच ।

इत्युक्त्वा सा महाकाली अस्मासु प्रविवेश ह ।

अयञ्च माधवो देहे प्रविष्टो ब्रह्मणस्तदा ॥
ततस्तं मोहयामास ब्रह्माणं ब्रह्मविग्रहम् ।
ततो ब्रह्मा स्वयं ज्ञात्वा स्वयं जुहोति चाव्ययम् ॥
स्वयम्भूरिति विख्यातिं तदा प्राप्तो न संशयः ।
किं करोमि क्व गच्छामि इति चिन्तासमाकुलः ॥
एवमेव विधातासावुषित्वा परिवत्सरम् ।
जलमेव ससर्जादौ व्यापकं परमं महत् ॥
गुणाभिमानं तत्तोयं कारणार्णवमुल्वणम् ।
तत्र स्थित्वा हेमरूपमस्रजद्दार्थसञ्चयम् ॥
तद्वीर्य्यवुद्‌ुदं यावदनीकं जातमन्तिके ।
तत्तद्ब्रह्माण्डमाख्यातं प्लवते कारणार्णवे ॥
तत्तद्ब्रह्माण्डरक्षार्थं ब्रह्माण्डानां वियोगताम् ।
करोमि सततं देवि ! रुद्रमूर्त्तिधरः स्वयम् ॥
शूलपाणि महादेवि ! प्रतिब्रह्माण्डपार्श्वतः ।
एकैकरुद्ररूपेण तिष्ठामि सततं शिवे ! ॥
यथा ब्रह्माण्डयोश्चापि संयोगो जायते न हि ।
तथा करोमि सततं स्थित्वा तत्कारणार्णवे ॥
एवमेव वयं सर्वे ब्रह्मविष्णुमहेश्वराः ।
प्रतिब्रह्माण्डमध्ये तु तिष्ठामो नात्र संशयः ॥
ततो ब्रह्मा जगद्धाता प्रतिब्रह्माण्डमध्यतः ।
प्रविश्यैकैकरूपेण अन्यतत्त्वचतुष्टयम् ॥
भूमिमग्निं तथा वायुमाकाशञ्च ससर्ज सः ।
एतैस्तु पञ्चभिस्तत्त्वैः सर्वां सृष्टिमकारयत् ॥
ततस्तु भगवान् विष्णुरिच्छया ब्रह्मणस्तदा ।
ब्रह्मदेहात् समुद्भूय पालयामास तां सदा ॥
सृष्टिं ब्रह्माज्ञया देवि ! प्रतिब्रह्माण्डमध्यतः ।

पृथक् पृथक् समास्थाय विष्णुरूपं महाभुजम् ॥
प्रतिब्रह्माण्डमध्ये तु संहरामि पुनः पुनः ।
अहं हि परमेशानि ! ब्रह्मदेहं समाश्रितः ॥
एवं किञ्चिन्न स्मरति ब्रह्मा किञ्चिन्महेश्वरि ! ।
सर्वकार्य्यं ममैवैतज्जानाति हि जगन्निधिः ॥
जलादिसकलं तत्त्वं ब्रह्माण्डादिकविस्तरम् ।
देवादिसकलं देवि ! दिग्विदिक् च चराचरम् ॥
कार्य्यञ्च कारणं देवि ! तथा विष्णोः समुद्भवः ।
सर्वं जानाति हि ब्रह्मा मत्कृतं मायया पुनः ॥
किन्तु सर्वं हि मिथ्यैव मातुर्माया हि केवलम् ।
तां मायां हि भजन्ते ये मायामितां तरन्ति ते ॥
तुष्टा चेत् परमा माया मुक्तिमात्रं प्रयच्छति ।
रुष्टा चेत् सैव माता मे भूमियोगं प्रयच्छति ॥
भुक्तिर्मुक्ति स्तस्य पादे वश्यैव चाश्रयाचिता ।
यस्य तुष्टा महादेवि ! मम माता हि कालिका ॥

श्रीदेव्युवाच ।

श्रुतं हि सकलं देव ! त्वत्प्रसादात् महेश्वरः ।
अश्रुतं सर्ववृत्तान्तं ब्रह्मादीना मगोचरम् ॥
इदानीं श्रोतुमिच्छामि यत् प्रोक्तं कारणार्णवम् ॥
किमाधारं महादेव ! तदाधारञ्च किं वद ।
सीमानं वद देवेश ! यदि स्नेहोऽस्ति मां प्रति ॥

ईश्वर उवाच ।

शृणु देवि ! प्रवक्ष्यामि गुह्याद् गुह्यतरं शुभम् ।
अतिगोप्यं सुगोप्यं हि ब्रह्मविष्ण्वाद्यगोचरम् ॥
महार्णवो भवेत् देवि ! महाकालो महेश्वरः ।
शून्यरूपं हि क्रीड़ार्थं भर्त्तारं पृथ्यकल्पयत् ॥

सैव काली जगन्माता महाकालतुला तु सा ।
भूत्वार्द्धतेजसी रूपा महाकालञ्च बिभ्रती ॥
शून्यरूपा कृष्णवर्णा मत्ता स्यादूर्द्ध तेजसी ।
सीमा पृष्टा त्वया देवि ! सीमा ब्रह्मैव केवलम् ॥
तेजोरूपं ब्रह्मतेजः प्रकाशरूपकं तथा ।
तत्प्रकाशं महादेवि ! व्याप्यव्यापकवर्जितम् ॥
नाधेयञ्चैव नाधारमद्वितीयं निरन्तम् ।
इदं हि सकलं देवि ! सर्वं मायामयं पुनः ॥
मिथ्यैव सकलं देवि ! सत्यं ब्रह्मैव केवलम् ।
इदं हि कथितं तुभ्यं सारात्सारं परात्परम् ॥
गुह्याद् गुह्यतरं गुह्यं गुह्याद् गुह्यं महेश्वरि ! ।
इदं हि परमं ज्ञानं सर्वमायानिकृन्तनम् ॥
सर्वज्ञानमतं भेदं महामार्त्तण्डविग्रहम् ।
कोटिकोटिमहादानात् कोटिकोटिमहातपात् ॥
कोटिकोटिमहाज्ञानात् कोटिकोटिमहाव्रतात् ।
कोटिकोटिमहातीर्थावगाहाच्च महेश्वरि ! ॥
बहुजन्मव्यतीते तु यदि शृणोति कर्हिचित् ।
तदा मुक्तो भवेत् देवि ! संसारे न पुनर्भवेत् ॥
इत्येवं कथितं तुभ्यं गोपयस्व स्वयोनिवत् ।
यथान्यो लभते नैवं तथा कुरु प्रयत्नतः ॥
गोपनीयं प्रयत्नेन मम सर्वस्वमुत्तमम् ।
दद्याच्छान्ताय धीराय योगिने कुलयोगिने ॥
ज्ञानिने देवदेवेशि ! अन्यथा नरकं व्रजेत् ।
कथितं सारभूतं ते खेलत्खञ्जनलोचने ! ॥
ब्रह्मज्ञानं [illegible]या देवि ! किं भूयः श्रोतुमिच्छसि ।
नातःपरतरं किञ्चित् विद्यते मम मानसे ।

गोपनीयं सदा भद्रे ! पशुपामरसन्निधौ ॥

इति योगिनीयन्त्रे देवीश्वरसंवादे चतुर्विंशतिसाहस्रे दशमः पटलः।

---

## अथ एकादशः पटलः।

श्रीदेव्युवाच। देवदानवगन्धर्वसुरेशपरिपूजित !।
गणेशनन्दिचन्द्रेशगोविन्दविधिवन्दित ! ॥
योगीन्द्रवन्दितपद ! सर्वलोकगुरो ! हर !।
या प्रोक्ता परमा विद्या काली कलुषनाशिनी ॥
यद्‌यत् मन्त्रं साधनञ्च पूजनञ्च पुरश्क्रियाम्।
मुद्रां बलिं तथा होमं भावं स्थानं तथैव च ॥
ध्यानं स्तोत्रञ्च कवचम् अस्याः श्रुतं पुरा मया।
इदानीं श्रोतुमिच्छामि स्थानं भेदं महेश्वर ! ॥
कुत्र वा प्राप्यते मोक्षः कुत्र वा सिद्धिरुत्तमा।
झटित्येव महादेव ! कृपया वद शङ्कर ! ॥
यदाश्रितो द्रुतं लोकः स्वकार्य्यफलभाग्भवेत्।
प्रयासस्य च बाहुल्यं हित्वा हि परमेश्वर ! ॥

ईश्वर उवाच।

शृणु देवि ! प्रवक्ष्यामि स्थानं परमदुर्लभम्।
द्रुतसिद्धिकरं देवि ! महामोक्षफलप्रदम् ॥
कालिकायाः श्मशानाद्धि नान्यत् स्थानं प्रशस्यते।
तत्र यद्‌यत् कृतं कर्म तदनन्तफलं लभेत् ॥
तत्र चैका पुरश्चर्य्या कृता चेत् परमेश्वरि !।
न तु मैवं महादेवि ! भावयुक्तः सशक्तिकः ॥
अवश्यं मन्त्रसिद्धिः स्यात् नात्र चित्रं कथञ्चन।

अनन्तफलदा पूजा सर्वत्रैव जले स्थले ॥
दिव्यभावेन वा देवि ! वीरभावेन चेद्भवेत् ।
शाक्तं वा वैष्णवं वापि शैवं वान्यं तथा पुनः ॥
वाराणस्यां जपेद् यो हि मासमात्रं वरानने ! ।
प्रातःकालं समारभ्य यावन्मध्यन्दिनं भवेत् ॥
अवश्यं मन्त्रसिद्धिः स्यात् सत्यमेव सुसिद्धिदे ! ।
निर्वाणं तस्य देवेशि ! अवश्यं जायते शिवे ! ॥
महाश्मशानं देवेशि ! आनन्दकाननं तथा ।
अविमुक्तं महादेवि ! तथा गौरीमुखं पुनः ॥
वाराणसी महाक्षेत्रं कालीरूपं परात्परम् ।
तत्र यद्यत्कृतं देवि ! किं तस्य कथयामि ते ॥
कामरूपे महापूजा सर्वसिद्धिफलप्रदा ।
नेपालस्य काञ्चनाद्रिं ब्रह्मपुत्रस्य सङ्गमम् ॥
करतोयां समाश्रित्य यावद्दिक्करवासिनीम् ।
उत्तरस्यां कुञ्जगिरिः करतोयात्तु पश्चिमे ॥
तीर्थश्रेष्ठादिक्षुनदी पूर्वस्यां गिरिकन्यके ! ।
दक्षिणे ब्रह्मपुत्रस्य लाक्षायाः सङ्गमावधि ॥
कामरूप इति ख्यातः सर्वशास्त्रेषु निश्चितः ।
ऋणानि त्रीण्यपाकर्त्तुं यस्य चित्तं प्रसीदति ॥
स गच्छेत् परया भक्त्या कामाख्यायोनिसन्निधिम् ।
तीर्थयात्रां समासाद्य यद्येकोऽप्यत्र गच्छति ॥
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ।
त्रिंशद्योजनविस्तीर्णं दीर्घेण शतयोजनम् ॥
कामरूपं विजानीहि त्रिकोणाकारमुत्तमम् ।
ईशाने चैव केदारो वायव्यां गजशासनः ॥
दक्षिणे सङ्गमे देवि ! लाक्षाया ब्रह्मरेतसः ।

त्रिकोणमेवं जानीहि सुरासुरनमस्कृतम् ॥
तत्र ये मानवाः सन्ति ते देवा नात्र संशयः ।
तत्र यद्यज्जलं देवि ! तत्सर्वं तीर्थमेव हि ॥
उपवीथिश्च वीथिश्च उपपीठञ्च पीठकम् ।
सिद्धपीठं महापीठं ब्रह्मपीठं तदन्तरम् ॥
विष्णुपीठं महादेवि ! रुद्रपीठं तदन्तरम् ।
नवयोनिरिति ख्याता चतुर्दिक्षु समन्ततः ॥
तत्र तत्र महापूजा चोत्तरोत्तरफलाधिका ।
द्विगुणं द्विगुणं भद्रे ! फलमेवं सुनिश्चितम् ॥
सर्वेषाञ्चैव विद्यानां सर्वमन्त्रस्य शाम्भवि ! ।
पूजने जपने चैव द्विगुणं द्विगुणं फलम् ॥
नवयोनिः समाख्याता कामाख्यायोनिमण्डलम् ।
आयोनिमहिपर्य्यन्तमाविद्यागन्धमादनम् ॥
पञ्चक्रोशमिदं देवि ! सर्वेषामेव दुर्लभम् ।
ब्रह्मविष्णुसुरेशाद्यैः सेवितं परमाद्भुतम् ॥
देवा मरणमिच्छन्ति का कथा मानुषेषु च ।
योनिपीठे महेशानि ! पञ्चक्रोशमिते शिवे ! ॥
ये गच्छन्ति शिवाकारा ये मृतास्तेऽपुनर्भवाः ।
ये च सूर्य्याकरं क्लेशं न प्राप्नुवन्ति कर्हिचित् ॥
योनिपीठे च निष्पापा ये वसन्ति नरोत्तमाः ।
ते सर्वे शङ्करा जातास्त्रिनेत्राश्चन्द्रमूर्द्धजाः ॥
सर्वेषाञ्चैव विद्यानां सर्वमन्त्रस्य चेश्वरि ! ।
पूजनं जपनञ्चैव कुरुते साधकोत्तमः ॥
अणिमाद्यष्टसिद्धीनामाश्रयो जायते नरः ।
तन्मध्ये च महादेवि ! गिरिर्नीलाचलोज्ज्वलः ॥
ब्रह्मविष्णुशिवाकारः सर्वशक्तिमयः पुनः ।

तन्मध्ये परमेशानि ! मनोभवगुहा परा ॥
मनोभवगुहामध्ये रक्तपानीयरूपिणी ।
कोटिलिङ्गसमाकीर्णा कामाख्या कल्पवल्लरी ॥
तत्तेजसा तु सन्दीप्ता मनोभवगुहा सदा ।
अस्याः स्पर्शनमात्रेण लौहो याति सुवर्णताम् ॥
चतुर्हस्तप्रमाणानि समन्तात् पर्वतात्मजे ! ।
अस्याः स्पर्शनमात्रेण शिवत्वमेति मानवः ॥
निष्पापो जायते देवि ! तत्क्षणान्नात्र संशयः ।
अत्र यद्यत् कृतं कर्म तदनन्तफलं भवेत् ॥
तन्मध्ये परमेशानि । समन्ताद्द्वादशाङ्गुलम् ।
आपातालाद् ह्रदं देवि ! प्रोच्छलज्जलमण्डलम् ॥
तज्जलं परमेशानि ! ब्रह्मविष्णुशिवात्मकम् ।
ऐश्वरं तज्जलं देवि ! कारणार्णवसंज्ञकम् ॥
बहु किं कथ्यते देवि ! तज्जलं परमामृतम् ।
सङ्क्षे तेनैव कथितं मातर्जानीहि सुन्दरि ! ॥
काङ्क्षन्ति सततं देवि ! तज्जलं च चराचराः ।
तज्जलस्पर्शमात्रेण तद्ध्रदस्पर्शनेन च ॥
तत्क्षणान्मानवो देवि ! देवो भवति निश्चितम् ।
पुण्यपापविनिर्मुक्तो जीवन्मुक्तो भवेद्ध्रुवम् ॥
तद्ध्रदे पूजयेद् यो हि तज्जलेन महेश्वरि ! ।
जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि ॥
वर्णितुं नैव शक्नोमि तस्य फलं गिरिनन्दिनि ! ।
ह्रदे हस्तं विनिःक्षिप्य जलमध्ये महेश्वरि ! ॥
अष्टोत्तरशतजपान्महासिद्धीश्वरो भुवि ।
मन्त्रासिद्धिर्भवेत्तस्य तत्क्षणान्नात्र संशयः ॥
शैवो वा वैष्णवो वापि शक्तो वान्यो महेश्वरि ! ।

जपन्ति ये हि मन्त्रं ते सिद्धिमायान्ति तत्क्षणात् ॥
अष्टोत्तरशतेनापि नात्र कार्य्या विचारणा ।
कुशाग्रै रुत्थितं तोयं यः पितृभ्यः प्रयच्छति ॥
गयाश्राद्धं कृतं तेन नियुताब्दं महेश्वरि ! ।
एतत्ते कथितं देवि ! कामाख्यायोनिमण्डलम् ॥
संक्षेपेण महेशानि ! वक्ष्याम्येवं विशेषतः ।
किन्त्वस्य कथ्यते देवि ! माहात्म्यं ते यशस्विनि ! ॥
यत्र कोटियोगिनीभिः काली वसति तारिणी ।
छिन्नमस्ता भैरवी सा सप्तसप्तविभेदिता ॥
धूमा च भुवनेशानी मातङ्गी कमलालया ।
भगक्लिन्ना भगाधारा तथा चैव भगन्दरी ॥
दुर्गा च जयदुर्गा च तथा महिषमर्दिनी ।
उपविद्याश्च याः प्रोक्ताः सर्वाभिस्ताभिरेव च ॥
ब्रह्मविष्णुमहेशाद्यैर्महाकाली वसेत् सदा ।
ब्रह्ममुखाश्रयं पीठमुग्रताराधिदैवतम् ॥
तत् पीठं विविधं प्रोक्तं गुप्तं व्यक्तं महेश्वरि ! ।
व्यक्ताद् गुप्तं पुण्यतरं दुरापं साधकोत्तमैः ॥
सर्वत्र लभ्यते देवि ! कुलद्वयविशारदैः ।
मनोभवगुहावङ्गी देवीशिखरमुन्नतम् ॥
तन्महोग्रमिति ख्यातं पीठं परमदुर्लभम् ।
सिद्धिकाली ब्रह्मरूपा देवता भुवनेश्वरी ॥
निवसेत्तत्र या काली घोरदैत्यविनाशिनी ।
तत्पीठोपरि संविश्य दशधा च जपेन्मनुम् ॥
सदा मन्त्रविशुद्धिः स्यात् तद्देहेन शिवो भवेत् ।
यत्क्षणं ते मया प्रोक्तं कृदमध्ये सुलोचने ! ॥
पादहीनं तत् फलं स्यात् पूर्णं शिवजपार्चने ।

अर्द्धं जालन्धरे ज्ञेयमुड्डीयाने तदर्द्धकम् ॥
अवश्यं तन्त्रसिद्धिः स्यान्नेपाले तिथिवासरात् ।
नीलकण्ठसमीपे तु नात्र कार्य्या विचारणा ॥
जपेन देवदेवेशि ! कथितं ते मया मुदा ।
त्रयोदशाहे महासिद्धिरेकाम्रकानने तथा ॥
दशलक्षेण गङ्गायां सिद्धिरावश्यकं शिवे ! ।
राढ़ायां विकटाख्यायां द्रुतञ्च पर्वतात्मजे ! ॥
लक्षत्रयेण सिद्धिः स्यात् सत्यमेव सुसिद्धिदे ! ।
पुष्कराख्ये च लक्षेण प्रयागे विंशलक्षतः ॥
कोटिजपाद्द्रोणगिरौ ज्वालायाञ्च द्विलक्षतः ।
तथैव विरजे क्षेत्रे लक्षद्वादशतः शिवे ! ॥
हिमालये त्रिलक्षेण केदारे पञ्चलक्षतः ।
कैलासे दशलक्षेण जयन्त्यां पञ्चलक्षतः ॥
उज्जयिन्यां दशाहेन मासेन मन्दराचले ।
अवश्यं मन्त्रसिद्धिः स्याज्जपनात् पूजनाच्छिवे ! ॥
इत्येवं कथितं तुभ्यं यत् पृष्टं गिरिसम्भवे ! ।
मातृजारसमं देवि ! सर्वदा परिगोपयेत् ॥

इति योगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशतिसाहस्रे एकादशः पटलः ।

---

## अथ द्वादशः पटलः ।

श्रीदेव्युवाच । भोः स्वामिन् ! परमानन्द ! योगिनामभयप्रद !
कामाख्यायोनिमाहात्म्यं यदुक्तं मे त्वया शिव ! ॥
सत्यं सत्यं न सन्देह आश्चर्य्यं सर्वमेव हि ।

तत्त्वेन तन्मया ज्ञातं कलौ किं न सुसिद्धिदम् ॥
न पश्यामो वशिज्ञानं मन्त्रसिद्धिन्तथैव च ।
किमेतत् कारणं नाथ ! वद मे करुणामय ! ॥

ईश्वर उवाच ।

नरकासुरनामा तु विष्णुवीर्य्यसमुद्भवः ।
पृथिवीगर्भसम्भूतो दानवानामधीश्वरः ॥
तस्मै विष्णुर्ददौ राज्यं कामरूपं महाफलम् ।
पृथिवीवचनात् सोऽपि दानवो युद्धदुर्धरः ॥
किरातैर्घटितं जित्वा रणे कामनृपोऽभवत् ।
पुनश्च भगवान् तस्मै निवासाय ददौ मुदा ॥
प्राग्ज्योतिषपुरं ख्यातं कामाख्यायोनिमण्डलम् ।
जित्वाऽभिषेचनं राज्ये विष्णुः शक्तिं ददावपि ॥
ततस्तु दर्शयामास मनोभवगुहां हरिः ।
सुस्नातं नारकं तद्वद्विधेयामास वै तदा ॥

विष्णुरुवाच ।

कामाख्यायाश्च माहात्म्यं सर्ववेदार्थसम्मतम् ।
ब्रह्मत्वं ब्रह्मणा प्राप्तं विष्णुत्वञ्च मया पुनः ॥
शिवत्वञ्च शिवेनैव कामाख्यायाः प्रसादतः ।
तस्माद्योनिं पूजयस्व यत्नात् सर्वात्मभिस्त्वमूम् ॥
यदा ते सुमुखी माता तदा ते सर्वसम्पदः ।
यदा ते विमुखी माता तदा ते न शुभं सुत ! ॥
तदैवाहञ्च त्यक्ष्यामि पुत्रत्वं वेद्म्यहं पुनः ।
इति ज्ञात्वा पूजयस्व विशेषेण वदामि किम् ॥

ईश्वर उवाच ।

इत्युक्त्वा स ययौ विष्णुर्वैकुण्ठं स्वनिकेतनम् ।
नरकः [illegible] यद्यदेव हि ॥

एतस्मिन्नन्तरे देवि ! वृत्तान्तं शृणु दारुणम् ।
ब्रह्मणो मानसः पुत्त्रो वशिष्ठोऽतीव सद्व्रतिः ॥
तारामाराधयामास तदा नीलाचले मुनिः ।
तत्रैवैकदिने देवि ! जप्तुं चैव सुरेश्वरीम् ॥
कामाख्यामण्डले तारां पुरद्वारे समागतः ।
तत्र तं वारयामास नरको ब्रह्मसम्भवम् ॥

नरक उवाच ।

इदानीं तिष्ठ विप्र ! त्वं नागच्छ मण्डलान्तरे ।
इदानीं पूज्यते देवी पूजान्ते त्वं गमिष्यसि ॥
इत्युदीरितमाकर्ण्य नरकस्य मुनीश्वरः ।
द्वादशादित्यसङ्काशो वभूव क्रोधमूर्च्छितः ॥
उवाच नरकं विप्रो वशिष्ठस्ताम्रलोचनः ॥

वशिष्ठ उवाच ।

रे पापिष्ठ ! किमुक्तं ते अयोग्योऽहं सुदुर्मते ! ।
कामाख्यापूजने काले मा लभेम गृहान्तरे ॥
गन्तुं योन्यन्तरे मूढ़ ! भूत्वापि ब्रह्मसम्भवः ।
इदानीं पश्य वीर्य्यं मे तव नाशकरं महत् ॥
इत्युक्त्वा च वशिष्ठोऽसौ जग्राह पाणिना जलम् ।
कमण्डलोर्महादेवीं शशाप दारुणं मुनिः ॥

वशिष्ठ उवाच ।

अहञ्च ब्राह्मणो मातः ! कामाख्ये ! ब्रह्मसम्भवः ।
हित्वा त्वां हि व्रजाम्यद्य न किञ्चिदुच्यते त्वया ॥
ब्रह्मवधोद्भवं पापं सत्यं तेऽद्य भविष्यति ।
एवमत्र महापीठे जपनात् पूजनादपि ॥
सिद्धिर्न जायते कर्हिं काले ... पुनः ॥

ईश्वर उवाच ।

दत्त्वेमं दारुणं शापं त्यक्त्वा तज्जलमुत्तमम् ।
नीलाचलं परित्यज्य गतोऽसौ खाण्डवं गिरिम् ॥
ततः सा परमा विद्या कामाख्या विश्ववन्दिता ।
महाज्योतिर्मयी देवी सर्वप्रकाशरूपिणी ॥
दह्यतेऽहर्निशं तारा तत्रैव स्वाङ्गतेजसा ।
तत्क्षणात् परिसन्दग्धा गता कैलासमन्दिरम् ॥
तदैव परमेशानि ! मनोभवगुहा पुनः ।
महान्धकारपटलैरावृता तद्वियोगतः ॥
हाहाकारः सर्वलोके मूर्च्छितो दानवेश्वरः ।
ततस्तां परमां मायां विषण्णवदनां पुनः ॥
दृष्ट्वाहं परिप्रपच्छ कामाख्यां परिसादरम् ।
कथं शिवे ! समायाता त्यक्त्वा तद्योनिमण्डलम् ॥
विषण्णवदना भूत्वा कामाख्ये ! वद कारणम् ।
त्वं देवि ! परमाराध्या स्थीयतां मे हृदि स्वयम् ॥
सर्वं प्रतिकरोष्येव विषण्णवदने ! कथम् ॥

कामाख्या उवाच ।

वशिष्ठो ब्रह्मणः पुत्रस्तारामाराधितुं मुनिः ।
मद्योनिमण्डले नाथ ! द्वारं मे समुपागतः ॥
प्रातस्तस्मिन् ब्राह्मणो मामर्चितुं समुपागतः ।
द्वारपालोऽभवद्राजा यावन्मे पूजनं भवेत् ॥
तावत् कोऽपि न क्षमो हि गन्तुं मद्योनिमण्डलम् ।
एवं नित्यं नियमितं नरकेनासुरेण च ॥
अतस्तं वारयामास नरको ब्रह्मनन्दनम् ।
ततस्तेनैव मुनिना शापो दत्तः सुदारुणः ।

शापं शृणु महादेव ! कथने रोदनं मम ॥
ब्रह्मविष्णुसुरेशाद्यैः काङ्क्ष्यते यत् परं स्थलम् ।
तत् मम विहतं देव ! को वोपायोऽस्ति मे वद ॥
हित्वा त्वां हि व्रजाम्यद्य न किञ्चिदुच्यते त्वया ।
ब्रह्मबधोद्भवं पापं सत्यं तेऽद्य भविष्यति ॥
एकमत्र महापीठे जपनात् पूजनादपि ।
सिद्धिर्न जायते कर्हि काले मद्वचनात् पुनः ॥
एवमेव मुनेः शापादागताहं तवान्तिकम् ।
कमुपायं करिष्यासि वद मे करुणामय ! ॥

ईश्वर उवाच ।

एवमुक्त्वा रुदन्तीं तामाश्वास्य च पुनः पुनः ।
आगत्याहं योनिपीठे जजाप कालिकामनुम् ॥
शापोद्धाराय देवेशी तस्माच्छापाद्विमोचिता ।
कामाख्यां स्थापयामास पूर्ववद्योनिमण्डले ॥
ततः सा परमा माया महाहर्षमुपागता ।
किन्तु कलौ महेशानि ! वर्षाणाञ्च शतत्रयम् ।
ब्रह्मशापो महेशानि ! फलिष्यति सुनिश्चितम् ॥

देव्युवाच । वशिष्ठेन पुरा शप्ता कामाख्या कामवासिनी ।
नरकस्य प्रसङ्गेन तत् सर्वं कथितं मयि ॥
इदानीं श्रोतुमिच्छामि शापोद्धारस्य ते कथा ।
कथं शापश्च ज्ञातव्यस्तस्यापि लक्षणं वद ॥
यच्छ्रुत्वा साधवः सर्वे दयामेष्यन्ति सर्वदा ॥

ईश्वर उवाच ।

कुमतेः पुरभूपस्य राज्यनाशो यदा भवेत् ।
तद्दिनात् परमेशानि ! ब्रह्मशापः प्रवर्त्तते ॥
ततोऽतीव दुराचारी कामरूपे भविष्यति ।

प्रजापीड़ा रोगहत्या बहुदोषो भविष्यति ॥
सदा युद्धं महामाये ! सदा दुर्वृत्तमेव च ।
देवदानवगन्धर्वाः सदा पीड़ापरायणाः ॥
कुपूर्वकुलटाचन्द्रमिते शाके दिवानिशम् ।
सौमारैश्च कुवाचैश्च यवनैर्युद्धमुल्वणम् ॥
भविष्यति कामपृष्ठे बहुसैन्यसमाकुलम् ।
ततो रणे च सौमारं जित्वा यवन वाञ्छितम् ॥
वर्षमेवाकरोद्राज्यं मकारादिर्महीपतिः ।
ततसहायं समासाद्य कुवाचः स्वीयराज्यभाक् ॥
वर्षान्ते यवनं हित्वा सौमारो राज्यनायकः ।
कुमारीचन्द्रकालेन्दौ गते शाके महेश्वरि ! ॥
कामरूपे मणेः पृष्ठसंयोगं सम्भविष्यति ।
कामरूपे तथा राज्यं द्वादशाब्दं महेश्वरि ! ॥
कुवाचसङ्गतो भूत्वा यवनश्च करिष्यति ।
षष्ठवर्गपञ्चमादिस्ततः शरीरमिच्छति ॥
शासितव्यं कामरूपं सौमारैश्च कुवाचकैः ।
यवनश्च कुवाचश्च सौमारश्च तथा प्लवः ॥
कामरूपाधिपो देवि ! शापमध्ये न चान्यकः ।
एवमेव बहुविधं वक्ष्ये लक्षणमीश्वरि ! ॥
क्रियते सत्कारकरं प्रत्यक्षं परमेश्वरि ! ।
वशिष्ठस्य तपस्यादावग्निः शाम्यति कामिनि ! ॥
भविष्यन्ति च तरवः शालाख्यपर्वतोपरि ।
स्वर्गद्वारे शिलापाते चैके वैपुरसन्निधौ ॥
कामाख्याया मठे भग्ने उर्वश्या सहशङ्गमः ।
ब्रह्मपुत्रस्य देवेशि ! सूक्ष्मधारा तु तस्य ? ॥
षोड़शाब्दे गते शाके भूमहीरिपुतुल्यके ।

विगतो भविता नूनं सौमारकामपृष्ठयोः ॥
षण्मासं तत्र सम्पूज्य उत्तराकालकोषयोः ।
गमिष्यन्ति च राजानः सर्वे युद्धविशारदाः ॥
कुवाचैर्यवनैश्चान्द्रैर्बहुसैन्यसमाकुलैः ।
त्रिभिर्म्लेच्छैः समाकीर्णं महायुद्धं भविष्यति ॥
अश्वमुण्डैर्नरमुण्डैर्गजमुण्डैर्विशेषतः ।
लोहित्योरक्तपूर्णश्च भविष्यति न संशयः ॥
तदैव परमा माया योगिनीगणवन्दिता ।
कामाख्या वर्णकश्यामा वलिहस्ता हसन्मुखी ॥
लोलजिह्वा मुण्डमाला दिग्वस्त्रा परमा स्थिता ।
पर्वताग्रं समाश्रित्य रक्तपानं करिष्यति ॥
ततः कुवाचो यवनं हित्वा सौम्यविनाशितः ।
करतोयानदीं यावत् करिष्यति महद्रणम् ॥
दशाहं तत्र संस्थाय यास्यति पुनरालयम् ।
ततो विप्रो नृपो भूत्वा कामरूपनिवासिनः ॥
करिष्यति जनान् देवी जपपूजादितत्परान् ।
एवं वर्षत्रयं राज्यं कृत्वा दण्डी द्विजो नृपः ॥
भविष्यति महामाये ! योनिमण्डलसन्निधौ ।
ततो द्वादशदले नाभिः कल्पते पूर्वभूमिपः ॥
ऐशानीमागतः कामानिकच्छत्रं करिष्यति ।
तद्राज्यं सकलं देवि ! धर्मेण पालयिष्यति ॥
तत्पत्नी श्यामवर्णा च ज्ञात् सदाराधितपार्वती ।
सवितं तनयं साध्वी राजानं राजपुत्रकम् ॥
तज्जन्मदिवसाद्देवि ! यावत् स्याद्द्वादशं दिनम् ।
तावत् सर्वाचले स्वर्णमणिराविर्भविष्यति ॥
तेनैव धनिनः सर्वे कामरूपनिवासिनः ।

भविष्यन्ति तदैव स्याद् वशिष्ठशापमोचनम् ॥
ततस्तेजांसि भूयांसि कामाख्यायोनिमण्डले ।
कामाख्यासन्निधाने च भविष्यति कलौ युगे ॥
मन्त्रसिद्धिश्च भविता तदैव योनिमण्डले ।
यथोक्तफलदा देवि ! कामाख्या हि भविष्यति ॥
जड़ीभवद्ब्रह्मशापाद् वर्षाणाञ्च शतत्रयम् ।
कामाख्या देववन्द्याङ्घ्रिकमला लज्जिता स्वयम् ॥
पूर्ववत् सकलं देवि ! ततस्तु सम्भविष्यति ।
एवं कामपरित्राणं संक्षेपात् कथितं मया ॥
किं श्रोतव्यमितो देवि ! गिरिजे ! कथ्यतां त्वया ॥

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्रे द्वादशः पटलः ।

---

## अथ त्रयोदशः पटलः ।

श्रीदेव्युवाच । देवेश ! परमेशान ! सर्वज्ञ ! सर्वपूजित ! ।
क्व गच्छसि मुहुर्नाथ ! कृपया वद शङ्कर ! ॥

ईश्वर उवाच ।

कौञ्चाख्याने च देशे च योनिगर्त्तसमीपतः ।
साध्वी सती ब्राह्मिका हि रेवती जनविश्रुता ॥
म्लेच्छदेहोद्भवा या तु योगिनी सुन्दरी मता ।
तत्कुचौ कठिनौ द्वन्द्वौ योनौ तस्याश्च पीनता ।
भिक्षाचारप्रसङ्गेन गच्छामि च दिवानिशम् ।
तत्सन्निधौ महेशानि ! तया मे रमणं मतम् ॥
देव्युवाच । कुत्रासीत् किं तपस्तस्यां कथं प्राप्तं महीतलम् ।

त्वया सार्द्धं रतिर्यस्या नाल्पस्य तपसः फलम् ।
तथापि च कृपा तस्यां लक्ष्यते महती मया ।
इदानीं किमभूत् सा हि कृपया परया वद ॥

ईश्वर उवाच ।

नगेन्द्रतनये ! बाले ! शृणु मत्प्राणवल्लभे ! ।
तत् साध्वीचरितं किञ्चित् कथयामि शुचिस्मिते ! ॥
रसक्रीड़ा कृता सार्द्धमेकाम्रकानने मुदा ।
वेदाङ्गसम्भवा साध्वी योगिनी सा सुरी मता ॥
नाभूत्तस्याः सुतस्तस्मिन् मत्क्रियायां नगात्मजे ! ।
मासासुमुत्कटं तत्तमस्मिन् मे चैत्रकामदे ॥
एकाम्रगहने देवि ! पर्वते तीर्थसङ्कुले ।
तत्रैको ब्राह्मणो यातो भिक्षार्थं तामुवाच ह ॥
न दत्तमुत्तरं तस्मै भिक्षा तिष्ठतु दूरतः ।
ततः शशाप विप्रस्तां म्लेच्छतां याहि दुर्मदे ! ॥
इत्युक्त्वा स ययौ विप्रो म्लेच्छत्वमाप योगिनी ।
अतोऽर्थिनं समर्थश्चेत् याचितं न ददाति चेत् ॥
स दुर्गतिमवाप्नोति समर्थो विनयं चरेत् ।
तस्यास्तु तपसा देवि ! क्रीतोऽहमभयं सदा ॥
अतस्तया रतिर्याता मम कामिनी सर्वदा ।
तस्याः पुत्रो विनुसिंहो मदौरससमुद्भवः ॥
एकेन जितवान् कामान् सौमारान् गौड़पश्चमान् ।
विनिर्जित्य नृपान् सर्वान् एकः श्रीमान् महामतिः ॥
तस्यापि बहवः पुत्राः पृथिवीपरिपालकाः ।
कुवाचा धार्मिकाः सर्वे राजानो युद्धदुर्मदाः ॥
तपः कर्त्तुं विनुसिंहो योगमाश्रित्य विह्वले ।
तिष्ठत्यव्यक्तरूपेण पट्ट-आकल्पमम्बिके ! ॥

कालात् सा माधवी देवी मद्देहे नीचतां गता।
यथा जाया नन्दिमाता तथेयं योगिनी मता॥
यथा पुत्रो भृङ्गरीटस्तथा विनुर्ममात्मजः।
विनुसिंहोऽपि कल्पान्ते परां सिद्धिमवाप्स्यति॥
तद्वंशजास्तु राजानः सर्वे कैलासवासिनः।
भविष्यन्ति महात्मानो गणेशाः सर्वशालिनः॥
रूपयौवनसम्पन्नैर्देवकन्यागणैः सह।
विहरन्ति सदा देवि! क्रीड़न्ते भैरवा यथा॥
यदा यदा ब्रह्मशापः कामाख्यायां भवेत् पुनः।
तदा तदाऽवतीर्य्यासौ स्वस्य कामस्य पालकः॥
तथा तद्वंशजाः सर्वे भवेयुः कामपालकाः।
कल्पान्तमेवं देवेशि! यावच्छापो विमुच्यते॥
तावदेव महामाये! तद्वीर्य्यं क्रीड़ति ध्रुवम्।
कल्पमेवं महेशानि! कलौ वर्षशतत्रयम्॥
वर्षाणां परमेशानि! भुक्तिशापं परात्मिका।
कामाख्या हि महामाये! तदन्ते सकलं भवेत्॥
एवन्ते कथितं देवि! ब्रह्मशापविमोचनम्।
कामाख्याया महेशानि! साकल्येन मया ध्रुवम्॥
तावद्यस्य ब्रह्मशापो निष्कृतिस्तस्य दूरतः।
तत्त्वकेणापि दष्टस्य प्रतीकारो हि तत्क्षणात्॥
ब्रह्मशापप्रसक्तस्य कल्पान्ते स्यात् प्रतिक्रिया।
नरकान्निष्कृतिर्नास्ति तस्याभुवान्न संशयः॥
एवं तद्वंशजाः सर्वे पीड्यन्तेऽहर्निशं प्रिये!।
नानाविधमहोत्पातै र्यावत् स्यात् साप्तपौरुषम्॥
तस्मात्तु ब्राह्मणं देवि! नावमन्येत कुत्रचित्।
सर्वदेवमयो विप्रो ब्रह्मविष्णुशिवात्मकः॥

ब्रह्मतेजःसमुद्भूतः सदा प्राकृतिको द्विजः ।
ब्राह्मणै र्भुज्यते यत्र तत्र भुङ्क्ते हरिः स्वयम् ॥
तत्र ब्रह्मा च रुद्रश्च खेचरा ऋषयो मुनिः ।
पितरो देवताः सर्वे भुञ्जते नात्र संशयः ॥
सर्वदेवमयो विप्र स्तस्मात्तं नावमानय ।
ब्राह्मणञ्च कुमारीञ्च शक्तिमग्निं श्रुतिञ्च गाम् ॥
नित्यमिच्छन्ति ते देवा पूजार्थं कर्मभूमिषु ।
पूजितैका कुमारी चेद्‌द्वितीयं पूजनं भवेत् ॥
कुमारीपूजनफलं मया वक्तुं न शक्यते ।
कुमार्य्यश्च शक्तयश्च सर्वमेतच्चराचरम् ॥
एका चेद्‌युवती देवि ! पूजिता स्यात्सलोकिता ।
सर्वा एव परा देव्यः पूजिताः स्यु र्न संशयः ॥
हुतमेकगुणं वह्नौ दत्तमेकगुणं द्विजे ।
लभ्यते कोटिगुणितं विश्वासान्नात्र संशयः ॥
अविश्वासे शतगुणं फलमेव सुनिश्चितम् ।
गोग्रासं पावनं लोके सर्वपापनिकृन्तनम् ॥
कुमार्य्यै चैव यद्दत्तं तथा शक्त्यै महेश्वरि ! ।
सततञ्चैव तेषान्तु कल्पकोटिशतायुतैः ॥
धर्मयोनिर्हि ते देवा धर्मो यज्ञादिको मतः ।
परलोके महाबन्धुर्धर्मो नास्त्यत्र संशयः ॥
कर्मण्येव कृते देवि ! वैदिके बहुजन्मनि ।
ततश्चागमिके धर्मे धर्मेणैव प्रवर्त्तते ॥
तत्र सम्प्राप्यते मुक्तिः कर्मबन्धविनाशिनी ।
ततस्तु बहुजन्मान्ते ज्ञानमासाद्य मुच्यते ॥
कर्मणा लभते भक्तिं भक्त्या ज्ञानमुपालभेत् ।
ज्ञानान्मुक्तिर्महादेवि ! सत्यं सत्यं मयोच्यते ॥

ज्ञानभावे समुत्पन्ने सम्प्राप्य ज्ञानकामिनीम् ।
तदा योगी विमुक्तः स्यादित्याह भगवान् शिवः ॥
न कर्मणः समारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
तस्मात् कर्म महामाये ! सर्वदा समुपाचरेत् ॥
वैदिकं तान्त्रिकं वापि यदि भाग्येन लभ्यते ।
न वृथा गमयेत् कालं द्यूतक्रीड़ादिना सुधीः ॥
गमयेद्देवतापूजाजपयज्ञस्तवादिना ।
द्विविधञ्चैव तत् कर्म वाह्यान्तरविभेदतः ॥
वाह्यञ्चानियमासक्तं मानसं न तथा पुनः ।
अशुचिर्वा शुचिर्वापि यत्र कुत्र स्थलेऽपि वा ॥
गच्छंस्तिष्ठन् स्वपन् वापि यद्वा यद्वा वरानने ! ।
कुर्य्याच्च मानसं धर्मं न दोषो मानसे क्वचित् ॥
सर्वेषां कर्मणां श्रेष्ठं जपज्ञानं महेश्वरि ! ।
जपयज्ञो महेशानि ! मत्स्वरूपो न संशयः ॥
जपयज्ञे हि तिष्ठेद्‌यो वाह्ये वा चान्तरेऽपि वा ।
सर्वदा परमेशानि ! जीवन्मुक्तो न संशयः ॥
वैदिकास्तान्त्रिका ये ये धर्माः सन्ति महेश्वरि ! ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥
ग्रहभूतपिशाचाद्या यक्षरक्षोगणाश्च ये ।
व्याघ्राद्या जन्तवो देवि ! तथैव कुपितान्तराः ॥
डाकिन्यो गुह्यकाश्चैव गन्धर्वाश्च सरीसृपाः ।
दानवा भैरवा दुष्टा ये वै श्मशानवासिनः ॥
केऽपि नेक्षन्ति तं देवि ! जापिनं भयविह्वलाः ।
न स्पृशन्ति च पापानि कदापि साधकं प्रिये ! ॥
फलमेतद्वाचिकस्य जपस्य परिकीर्त्तितम् ।
उपांशुः स्यात् शतगुणः सहस्रो मानसो मतः ॥

मन्त्रमुच्चारयेद्वाचा वाचिको जप ईरितः ।
किञ्चित् सुश्रवणोपेत उपांशुः परिकीर्त्तितः ॥
निजकर्णागोचरो यो मानसः परिकीर्त्तितः ।
वाचिकस्तु जपो बाह्यो मानसोऽभ्यन्तरो मतः ॥
उपांशुर्मिश्र एव स्यात्त्रिविधोऽयं जपः स्मृतः ।
जपेन देवता नित्यं स्तूयमाना प्रसीदति ॥
प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिञ्च शाश्वतीम् ।
साधनञ्च जपञ्चैव ध्यानञ्चैव वरानने ! ॥
नाल्पेन तपसा देवि ! केनापि कुत्र लभ्यते ।
यदि भाग्येन देवेशि ! बहुजन्मार्जितेन च ॥
प्राप्यते यत्र तच्चेत्तु जन्मनाप्येकमोक्षभाक् ।
ब्रह्मज्ञानञ्च यत् प्रोक्तं समाधिस्तत् प्रकीर्त्यते ॥
इत्येवं कथितं रम्यं समासेन महेश्वरि ! ।
इतःपरं महादेवि ! किं पुनः श्रोतुमिच्छसि ॥

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्रे त्रयोदशः पटलः ॥

---

## अथ चतुर्दशः पटलः ।

श्रीदेव्युवाच । भो देव ! परमानन्द ! महायोगेश्वर ! प्रभो ! ।
शुश्रूषा यत्र मे देव ! क[illegible]था कथ्यतां गुरो ! ॥
श्रुतं विप्रस्य चरितं रेतसस्ते सनातन ! ।
प्लवश्च यवनश्चैव सौमारश्च महेश्वर ! ॥
तेषां रेतःसमु[illegible]ता म्लेच्छास्ते कामपालकाः ।
कथं जाता महादेव ! वद मे करुणामय ! ॥

ईश्वर उवाच ।

शाल्वपुत्त्राश्च वाह्लीका मृताः कौरवसंयुगे ।
नान्यो वंशधरः कश्चित्तद्वंशे तु त्रिलोचने ! ॥
तदा वाह्लीकरमणी कौर्मिर्गुणवती शुभा ।
युवती सुन्दरी रम्या तपःशीला महामतिः ॥
पुत्त्रेच्छया गता काशीं तपस्तेपे दिवानिशम् ।
स्थित्वा विश्वेश्वराग्रे तु द्वारे मे मुक्तिमण्डपे ॥
तदा वलिसुतो वाणो महाकालो महाबलः ।
तद्द्वारपालको देवि ! शुभे तां निरीक्ष्य च ॥
मदधीकारमादाय भैरवः काममोहितः ।
कपालमाली मदिरामोदितोन्मत्तवेशवान् ॥
तपस्विवेशमास्थाय निर्लज्जो रतिनायकः ।
कौर्मेर्जातो महादेवि ! बन्धुकामलकादिभिः ॥
भैरवो विपुलस्तत्र ततो जातो महाङ्कुशः ।
कौर्मेः सुतो महादेवि ! महाकालस्य रेतसः ॥
वात्सल्यं तत्र दृष्ट्वाहं तत्पुत्त्रो भैरवस्य च ।
तयाऽनिशं रतिश्चापि महाङ्कुशमहाभुजम् ॥
राज्याप्तिं सह तस्यापि कौर्मेश्चेष्टाच्च शाम्भवि ! ।
कामरूपान्तकं शाल्वं राज्यं दत्त्वा महाङ्कुशे ॥
कौर्मिर्योनिं समासाद्य कुलाचारपरायणः ।
समर्चयन् यथा काश्यां तथा तत्रापि सर्वदा ॥
तत्पूजा तत्र महती भविष्यति दिवानिशम् ।
महाङ्कुशः समुद्भूय काश्यामास्कन्दनं कुतः ॥
ततः प्लवेतिनामा च जगाम मणिमण्डपम् ।
एवन्ते कथितं देवि ! चरितं प्लवसम्मतम् ॥
जीवनं चरितं किञ्चित् कथयामि शृणुष्व तत् ।

आसीत्त्रेतायुगे राजा बाहुर्धर्मपरायणः ॥
महाधीशो ! महायोद्धा सूर्य्यवंशसमुद्भवः ।
पितृशत्रून् विनिर्जित्य सप्तद्वीपां वसुन्धराम् ॥
बुभुजे परमं कामं योगध्यानं सुविस्तृतम् ।
बहुकाले महामाये ! ततः स्वमदमोहितः ॥
मत्तोऽधिकोऽधिको राजा नासीद्भूमण्डलेऽधुना ।
निपात्य पितृशत्रून् यः पितृश्राद्धं कृतं हि यत् ॥
एवं जातः स्वाहङ्कारः सर्वनाशकरो हि यत् ।
तस्मात्तु पापसञ्चारो जातस्तस्य महाभुजः ॥
पापात्मा यो भवेद्राजा राजतां न कदाचन ।
अहङ्कारी युद्धचर्य्यः सदा नैवाव्यवस्थितिः ॥
महापापानि सर्वाणि साङ्गान्येतानि निश्चितम् ।
तस्य तेनैव भावेन राजलक्ष्मीर्विनिस्सृता ॥
आविर्भूतौ हैहयश्च तालजङ्घा नृपोत्तमाः ।
मन्त्रयित्वा च राजानो लङ्घयित्वाम्बुधिं तदा ॥
व्याजतः करदानस्य प्रापुरुत्तरकोशलम् ।
आदौ पराजितस्तेभ्यो बाहुर्मासेन निष्क्रमन् ॥
जितराज्यो बाहुराजः सस्त्रीको वनमाययौ ।
ममार तद्वने बाहुः समस्तं निष्प्रभं तदा ॥
तेन विसर्जितौ भूपौ तालजङ्घीयहैहयौ ।
अवसानाद्वशिष्ठस्य चाश्रमं जग्मतुस्तदा ॥
पुनश्च तौ हि राजानौ यवनौ प्राणकातरौ ।
वशिष्ठं शरणं यातौ रक्षरक्षेतिवादिनौ ॥
ततस्तान् यवनान् विप्रो वशिष्ठस्त्वभयं ददौ ।
एतस्मिन्नन्तरे भूपः सगरः खड्गमूर्च्छितः ॥
तान् नृपान् हन्तुकामस्तु वशिष्ठान्तिकमाययौ ।

ततस्तथा भूपमालोक्य वशिष्ठो ब्रह्मसम्भवः ॥
उवाच सगरं देवि ! धर्मज्ञं बाहुनन्दनम् ।
मा हिंसीर्बाहुनन्दन ! अभयं दत्तवानहम् ॥
तच्छ्रुत्वा चकितो राजा बाहुजो भविता कृती ।
ब्रह्मवाक्यं वृथा न स्यात् प्रतिज्ञा मेऽपि पूर्वजा ॥
इदानीं किं करोम्यद्य सङ्कटं समुपस्थितम् ।
इति सञ्चिन्त्य तत् सर्वं वशिष्ठमभ्यवेदयत् ॥
हनामि मानुषगणान् प्रतिज्ञा मे कृता पुरा ।
तव तद्वचनं श्रुत्वागतोऽस्मि किं करोम्यतः ॥
तद्वाक्यमन्यथा कर्त्तुं मया नोक्तं सदा मुने ! ।
यद्युपायं न करोषि श्रेयो मे मरणं तदा ॥
एवं श्रुत्वा वशिष्ठोऽसौ सत्वरं प्रत्यभाषत ॥

वशिष्ठ उवाच ।

मा विषादं गच्छ सखे ! कर्त्तव्यं यच्छृणुष्व मे ।
तवारातीनिमान् सर्वान् मुण्डयित्वा शिरांसि तु ॥
वेदाचारवहिर्भूतान् कारयामास दूरतः ।
हिमाद्रिपश्चिमे भागे देशे तु यवनो नृपः ॥
इत्थं मे वचनं तिष्ठेत् प्रतिज्ञापि च ते शिशो ! ।
शिरसः कृन्तनं यद्धि मुण्डनं तद्वदेव हि ॥
वेदेऽपि स्थिरमेवं हि समानं समुदाहृतम् ॥

ईश्वर उवाच ।

इत्थं तद्वचनं श्रुत्वा सगरोऽपि तथाकरोत् ।
तेऽपि वै क्षत्रियाः सर्वे हैहयास्तालजङ्घकाः ॥
विड़म्बिता विहीनास्ते सदा मुण्डितमस्तकाः ।
सुषमसुनिमाश्रित्य तदाचारविराजिताः ॥
सुषमस्योपदेशात्ते तपस्तेपुः सदाश्रिताः ।

यमाश्रित्य महादेवि ! म्लेच्छाचारपरायणाः ॥
तामसास्ते महादेवि ! तामसं भावमाश्रिताः ।
संयोगश्च वियोगश्च मन्त्राणाञ्च द्विधा गतिः ॥
सात्त्विको राजसो देवि ! संयोगः फलदायकः ।
वाह्यान्तरवियोगेन संयोगो हि अनुत्तमः ॥
तामसे तु वियोगः स्याद् वाह्यः सिद्धिफलप्रदः ।
तामसः परलोकस्य वाह्यस्तद्धर्म ईश्वरः ॥
तेषान्तेनैव भावेन प्रसादो मेऽभिजायते ।
मया दत्तो वरस्तेभ्यो शृणु कामयितुं वरम् ॥
भुङ्क्ष्वेदानीमिदं राज्यं यवन ! तिष्ठ एव च ।
कालं तथेन्द्वष्टनवान् गते शाके कलौ युगे ॥
पुण्यदेशाधिपा यूयं भविष्यथ सुनिश्चितम् ।
एवमेव महेशानि ! कामरूपाधिपाः शिवे ॥
यवनो मत्प्रसादेन तथान्यपुण्यभूमिषु ।
बहुभूपसमाकीर्णः कलौ भुङ्क्ते महीं मुदा ॥
एवन्ते कथितं देवि ! वृत्तान्तं यावनं सदा ।
इदानीं श्रूयतां युद्धे सौमारचरितं तथा ॥
एकादशरिपुग्रस्तः खाण्डवं वनमाययौ ।
विहाय देवराजानं कौशाङ्ग्या सहितः स्वयम् ॥
गतेषु बहुकालेषु क्रीड़या देवभूभुजः ।
तौर्य्यत्रिके सम्यगिच्छा जाता बहुविधास्तथा ॥
रम्भां तिलोत्तमां काञ्चीं कुरङ्गाक्षीं मनोहराम् ।
आदिदेश समानीय नृत्यं कर्त्तुञ्च रम्भया ॥
ततस्तेन वृताः सर्वा वेश्या जग्मुर्मुदान्विताः ।
नानाविधिविधानेन इन्द्रं तुतोष मोहिनी ॥
मोहिता चापि कौशाङ्गी देवराजेन सङ्गता ।

तासां नृत्यप्रगीतेन कामभ्रंशो भविष्यति ॥
एतस्मिन्नन्तरे देवि ! स्वर्गवेश्या मनोहरा ।
तया रतिं समकरोत् स राजा हृष्टमानसः ॥
या काली परमा विद्या ब्रह्मरूपा सनातनी ।
कामाख्या सैव देवेशि ! सर्वसिद्धिविनोदिनी ॥

श्रीदेव्युवाच ।

कथं काली ब्रह्मरूपा कामाख्याभून्महेश्वर ! ।
सर्वं मे कृपया नाथ ! वदस्व चन्द्रशेखर ! ॥

ईश्वर उवाच ।

यदा सृष्टिः कृता धात्रा स्वयमेव स्वयम्भुवा ।
तदाहङ्कारदोषेण पूरितोऽसौ पितामहः ॥
अहङ्कारो नाशकरः सर्वस्यैवेति चेश्वरि ! ।
तमहङ्कारमादाय स्थितो ब्रह्मा जगन्निधिः ॥
विस्मृत्य सर्ववृत्तान्तं कालिकोक्तं हि यत् पुरा ।
केवलाहङ्कारयुतो धात्रा भूतो हि सर्वदा ॥
सर्वकामालयं विश्वं कस्य वा किं कृतं भवेत् ।
तथापि मायया देवि ! ब्रह्माहङ्कारमोहितः ॥
तं तथाभूतमालोक्य ब्रह्मणः परमेश्वरि ! ।
तद्देहात् कल्पयामास तदहङ्कारतः शिवे ! ॥
दैत्यं परमदुर्द्धर्षं केशिनामानमुद्धतम् ।
निःसृत्य ब्रह्मणो देहाद् दैत्यः परमदारुणः ॥
धारयतिस्म तदा देवि ! ब्रह्माणं शासितुं ततः ।
ततः पलायनञ्चक्रे विष्णुना स पितामहः ॥
ततः केशी महादैत्यः पुरञ्चक्रे च भारते ।
केशिपुरमिदं ख्यातं तत्र स्थित्वा हि दानवः ॥
बुभुजे सकलं देवि ! भूर्भुवः स्वश्चराचरम् ।

ब्रह्मशब्दजपादेवं सदाब्रह्माण्डमण्डले ॥
ततो ब्रह्मा जगद्धाता विष्णुना निरहङ्कृतिः ।
अस्तौषीज्जगतां मातां कालीं विघ्नविनाशिनीम् ॥

ब्रह्मविष्णू ऊचतुः ।

नमः परमकल्याणीं प्रणवात्मानमीश्वरीम् ।
निजवीजस्वरूपाञ्च कामवीजस्वरूपिणीम् ॥
मुण्डमालावलीरम्यां ललज्जिह्वां सनातनीम् ।
मायावीजस्वरूपाञ्च कूर्चवीजस्वरूपिणीम् ॥
वन्देऽहं जगतां मातां कालीं कमललोचनाम् ।
घोररावां शिवसङ्गीं मुक्तकेशीं दिगम्बरीम् ॥
नमामि कालिकां मातां महाविघ्नविनाशिनीम् ।
प्रणमामि सदा हृद्यां तां मातां भुवनेश्वरीम् ॥

ईश्वर उवाच ।

एवं स्तुता तदा देवी ब्रह्मणा विष्णुनापि च ।
सहसाकाशवाणी वै किमिच्छसि पितामह ! ।
भो विष्णो ! त्वं महावाहो ! किमिच्छसि च तद्वद

ब्रह्मविष्णू ऊचतुः ।

जगद्दैत्यवरश्चैकः केशिनामा महासुरः ।
आवयोः सकलं नीतं नित्यं तत् तेन मण्डलम् ॥
हत्वेदानीं तमसुरमावां स्थापय पूर्ववत् ।
देहि दास्यं पदाम्भोजे माहात्म्य तन्निवेदनम् ॥

श्रीकाल्युवाच ।

शृणु ब्रह्मन्नहो वाक्यं अहङ्कारो गतस्तव ।
इदानीं परिसंज्ञातं ते यान्ति च तवाधिकाः ॥
सर्वमायामयं विश्वं किं त्वेवान्यस्य पङ्कजे ।
अहङ्कारात्समीचित्वा विघ्नं दत्तं दुरासदम् ॥

माया तुभ्यं जगद्धातस्तवाहङ्कारनिर्मितम् ।
केशिदैत्यस्वरूपोऽस्मि हन्मि तन्तु स्थिरोभव ॥
मा भयं कुरु भो विष्णो ! स्थिरोभव महामते ! ॥

ईश्वर उवाच ।

एवमासाद्य आश्वास्य ब्रह्मविष्णुपरात्मिका ।
हुङ्कारेणैव तं भस्मीचकार दानवोत्तमम् ॥
केशीं महासुरं कालो विधिमाह ततस्तु सा ॥
काल्युवाच । अहङ्कारात् पातकं ते जातं ब्रह्मन् ! महत्तरम् ।
तत्पापस्यापनोदाय क्रियते पर्वतोत्तमः ॥
केशिदैत्यभस्मना च गोग्रासं बहुना धृतम् ।
तद्ग्रासभस्मना नित्यं गोस्ते पापं क्षयिष्यति ॥

ईश्वर उवाच ।

एकीकृत्य च तद्भस्म केशिदैत्यशरीरजम् ।
कमण्डलुजलक्षेपाच्चकार पर्वतं विधिः ॥
नात्युच्छ्रितं नातिनिम्नं गोग्रासं बहुना धृतम् ।
तद्ग्रासभस्मना गोश्च तुष्टिः पुष्टिर्भवेद् ध्रुवम् ॥
अतो गोवर्द्धनं नाम पर्वताय ददौ विधिः ।
यथा यथा चात्ति गौश्च तद्ग्रासं पर्वतोत्तमे ॥
तथा तथा क्षयं याति पातकं ब्रह्मणः शिवे ! ।
तावत्तु निष्कृतिर्धातुर्यावद् गोवर्द्धनो गिरिः ॥
तदन्ते निष्कृतिस्तस्य ब्रह्मणः परमेश्वरि ! ।
एवमेवापराधस्ते प्राधान्ये यदि ज्ञायते ॥
तत्फलं पीड़नं तस्य सर्वेषाञ्च त्रिलोचने ! ।
ततो ब्रह्मा जगद्धाता विष्णुश्च जगतां पतिः ॥
पुनश्च तत्क्रमेणैव अस्तौषीत् परमेश्वरीम् ।
ततः काली जगन्माता तावुवाच किमिच्छथः ॥

ददामि वत्सौ ! तत्सर्वं भवन्तौ कातरौ कथम् ॥

ब्रह्मविष्णू ऊचतुः ।

आवयोर्जगताञ्चैव मङ्गलाय पदाम्बुजम् ।
महामुक्तिप्रदञ्चैव त्वदीयमतिनिर्मलम् ॥
अदृश्यमपि गोप्यं हि मातराकारवर्जितम् ।
कथं तत् पूजयिष्यावः सर्वं मङ्गलदायकम् ॥
भूमौ स्थानं कल्पयस्व जपितुं त्वत्पदाम्बुजम् ।
सर्वदा पूजयिष्यावो महामङ्गलकारणम् ॥
आवयोश्चैव सर्वेषां महामुक्तिफलाय च ।
तदावयोर्दानवाद्यैरशुभैः किं करिष्यति ॥
अवश्यं नौ तरिष्यावो दुस्तरात् त्वत्पदार्चनात् ॥

काल्युवाच । शृणु वत्स ! महाविष्णो ! वचनं परमं महत् ।
जलहुङ्कारवीजेन चकार भस्म दानवम् ॥
केशीमन्त्रं महावीजं शब्दब्रह्मस्वरूपकम् ।
महातेजोमयं विद्धि तद्बीजं परमं पदम् ॥
केशिपुरे च तद्बीजं केशिहन्त्वा व्यवस्थितम् ।
आपातालं क्रोशमात्रं तद्बीजं तेजसावृतम् ॥
अतो हि पूज्यं तत्स्थानं महातेजोमयं ध्रुवम् ।
तत्स्थानं त्वं समादाय मां पूजय यदीप्सितम् ॥
अतिसङ्गुप्तभावेन ईप्सितं प्राप्यते फलम् ।
देवदानवगन्धर्वैरन्यैरपि महामते ! ॥
यथा न ज्ञायते कश्चित् तथार्चनां कुरुस्व मे ।
सर्वापद्भ्यः परित्राणं त्वां करिष्यामि सर्वदा ॥
क्रीड़ास्थानमिदं विष्णो ! उक्तं तुभ्यं मया सदा ।
इच्छाशक्तिस्तु दत्ता वै आद्यञ्चैव मया पुरा ॥
महालक्ष्मीस्वरूपेण सेवते ब्रह्मसंस्थिता ।

सैव वृन्दास्वरूपेण पुरेऽत्र सम्भविष्यति ॥
केशिपुरं समा व्याप्य ततो वृन्दावनाभिधम् ।
केशिपुरस्य भविता तया ते क्रीड़नं ध्रुवम् ॥
भूत्वा वृन्दातरुर्लक्ष्मीरत्र स्थास्यति सर्वदा ।
दैत्यविघ्नं हि भविता सर्वदैत्यनिसूदनी ॥
भो ब्रह्मन् ! शृणु वत्से तद्वचनं मे शुभोदयम् ।
केशिदैत्यबधार्थाय यत्र मे पूजनं कृतम् ॥
युवाभ्यां तत्र पश्य त्वं जातं मे योनिमण्डलम् ।
मम तेजःसमुद्भूतं जानीहि योनिमण्डलम् ॥
सर्वेषामुद्भवस्थानं योनिरेव न संशयः ।
जानीहि प्रकृतिं देव ! योनिं मे यां तु मामकीम् ॥
सम्पूज्य योनिं देवेश ! सृष्टिं कुरु यथार्थतः ।
कुत्रापि च भयं न स्यात् तव क्वापि पितामह !॥
अधिष्ठानमस्ति मम तत्र पीठे न संशयः ।
जानीहि तदधिष्ठातृरूपं मेऽस्ति सुशोभनम् ॥
नित्यं पूजय तद्रूपं कामाख्यायोनिमण्डले ।
योनिमण्डलमासाद्य कामाख्यां यस्तु पूजयेत् ॥
सर्वसिद्धीश्वरो भूत्वा परत्रेह्यशो मोदते ।
न भयं तस्य कुत्रापि कस्मादपि प्रजायते ॥
तवान्येषां हितार्थाय स्थापितं योनिमण्डलम् ।
पृथिव्यां भारते वर्षे कामरूपं महालयम् ॥
नवयोनिसमाकीर्णं महामुक्तिफलप्रदम् ।
नवयोन्यात्मके ब्रह्मन् ! कामरूपे मनोहरम् ॥
कामाख्यातेजसा देवि ! दीप्यते योनिमण्डलम् ।
किन्त्विदानीं भवत्पापं प्रपश्यामि कथं न ॥
अहङ्कारात् समुत्पन्नं त्रिविधं पातकं तव ।

कायिकं वाचिकञ्चैव मानसञ्च तथा पुनः ॥
तत्पापाद् योनिपीठं मे न पश्यसि कदाचन ।
तत्पापं ध्यानधाराभिर्वह्नीभूतं दिवानिशम् ॥
तत्र वाचनिकं पापं गोवर्द्धनात् प्रकाश्यते ।
तत्त्रयस्य प्रशमनं वदामि तच्छृणुष्व मे ॥
नक्षत्रलोकान्नक्षत्रमेकं तत्र निपात्य च ।
श्रेष्ठतामेहि हे देव ! दृष्ट्वा पीठं तपः कुरु ॥
यावद्राक्षसीज्योतिस्तु मिलितं योनितेजसि ।
तावत् कुरु तपो घोरं तदन्ते पातकद्वयम् ॥
प्रशाम्यति न सन्देहो वसतिं कुरु सत्वरम् ।
तत्र तपोवशात् तत्तु केनापि नहि वीक्ष्यते ॥
अपराधाच्छ्रेयसस्तु भवेद्दै गतिरीदृशी ।
नक्षत्रस्थापनात्तत्र पृथक् जातिषु निश्चयम् ।
स्थानं तद्गास्यते वत्स ! सर्वलोके निरन्तरम् ॥

ईश्वर उवाच ।

इत्युक्त्वा विररामासौ गगनस्था परात्मिका ।
कालीं परमकल्याणीं तां नत्वा विधिकेशवौ ॥
विस्मयाविष्टमनसौ राज्यं तच्चक्रतुस्तु तौ ।
इत्येवं कथितं गुह्यं यत् पृष्टं गिरिसम्भवे ! ।
प्राचीनमतिगोप्यं हि वृत्तान्तं कुलनायिके ! ॥

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशतिसाहस्रे
चतुर्दशः पटलः ।

—

# अथ पञ्चदशः पटलः।

ईश्वर उवाच।

कौशाङ्गी तं समालोक्य मनो दधे तथा तु सा ॥
कामरूपेषु विभ्रान्ता स्खलिता नृत्यगीतयोः।
रतिर्धैर्यं तयोर्जातं तस्यास्तत्स्खलने पुनः ॥
ततस्तस्या मनो ज्ञात्वा कौशाङ्गी क्रोधमूर्च्छिता।
उवाच निष्ठुरां वाणीं शृणु देवि ! मनोहराम् ॥
भूत्वा वेश्यां महादुष्टा मदविक्षिप्तमानसा।
अतः प्रचलितं चित्तमावयोरतिकर्मणि ॥
अहो याहि भुवं वेश्ये ! राजानं पतिमाप्नुहि।
एवमुक्तं दुष्टशापं कौशाङ्गीमुखनिःसृतम् ॥
श्रुत्वा च मूर्च्छिता भूत्वा कौशाङ्गी चरणेऽपतत्।
विललाप बहुविधं धृत्वा च चरणे मुहुः ॥
ततो जगाद कौशाङ्गी द्वात्रिंशद्वायनं भुवि।
भुक्त्वा शापं मनोहरे ! पुनः सौख्यं गमिष्यसि ॥
मन्दाकिन्यां त्यक्ततनुं ततस्तां मानवोश्रिताम्।
कङ्कती मोहिनी रम्या धार्त्तराष्ट्रं पतिं गता ॥
कौरवे च कुरुक्षेत्रे हते नारीशतं मृतम्।
तूर्णञ्च कङ्कती सागाच्चन्द्रचूड़ं गिरिं भिया ॥
अत्युच्चशिखरे तस्य सा तस्थौ भृशदुःखिता।
प्राप्यत्तुं स्वर्गवेश्या सा द्वितीयदिवसे निशि ॥
कामवाणैः सदा विद्धा मूर्च्छिता तापमागता।
ततो रथे समारूढ़ो गत्वापश्यत् तु सुन्दरीम् ॥
सालङ्काराञ्च कुशदेःपात् स्मृत्वा तत्पूर्वकारणम्।
बोधयित्वा च सर्वं तां कान्तां कामविमोहिताम् ॥

रतिं धृत्वा गतस्तस्याः सुतोऽभूच्च अरिन्दमः ।
कङ्कत्याः परमेशानि ! पर्वते गन्धमादने ॥
अतो जग्राह तामिन्द्रो द्वितीयदिवसे ऋतौ ।
ततः सोऽरिन्दमश्चाभूत् म्लेच्छाचारपरायणः ॥
व्याधवृत्तिरतो घोरः सर्वदा प्राणिहिंसकः ।
सर्वमांसादनो देवि ! किरातो घटितो यथा ॥
सर्वपुण्यबहिर्भूतः सर्वपापसमाकुलः ।
मद्यमांसभगामोदी कदाचारपरायणः ॥
ईदृशं तं सुतं दृष्ट्वा कङ्कती भृशदुःखिता ।
तपस्तेपेऽतिगाढ़ञ्च सारात्सारं चतुष्टयम् ॥
ततस्तां देवराजोऽसावुवाच तत्पुरस्थितः ॥

इन्द्र उवाच ।

कथं तप्तं तपो वाचं त्वया कङ्कति ! मे वद ।
तपसा तेऽतिसन्तुष्टो यदिच्छसि ददामि च ॥

कङ्कती उवाच ।

सुतस्ते ईदृशो जातः सदा पापपरायणः ।
द्रष्टुं न शक्ता देवेश ! यथेच्छसि तथा कुरु ॥
देवाधिदेव ! देवेश ! सुतस्तेऽयं सुराधिप ! ।
भवेत् सत्यं न सन्देहस्त्वयन्तु च नराधमः ॥
अतस्त्वं देवतानाथ ! पिताऽस्यायं सुतस्तव ।
यथेच्छसि कुरु तथा मां तु नय द्रुतं प्रभो ! ॥
किङ्करीं त्वत्पार्श्वदेशे किङ्करीत्वे नियोजय ।
देवाधीश ! एष काम्यो नान्यः काम्यः कदाचन ॥

इन्द्र उवाच ।

शृणु प्रेयसि ! मद्वाक्यं शापकालो गतस्तव ।
त्वरितो नेष्यास्यधुना त्वामहं सुस्थिरा भव ॥

पुत्रस्य पापयोगेन वंशनाशकरोऽभवत्।
अतः शताष्टविंशे च पुरुषे च्यविते सति।
सौमारवासिनो भूत्वा वंश्या मे राजपुङ्गवाः॥
पुण्यश्लोका धर्ममयाः सदाचारपरायणाः।
न्यायबुद्धिमहोत्साहा देवविप्रपरायणाः॥
भविष्यन्ति न सन्देहो ब्रह्मत्वन्तु नयाधुना।
गच्छन्ति चापि वैकुण्ठे सर्वे स्युर्विष्णुवल्लभाः॥
लयमेष्यन्ति तत्रैव यावदाभूतसंप्लवम्॥

ईश्वर उवाच।

ततस्तन्तु समादायागच्छदिन्द्रो निजालयम्।
तथा काले तु सौमारः कामरूपाधिपोऽभवत्॥
पूर्वभागे च सौमारः कुवाचः पश्चिमे तथा।
दक्षिणे यवनस्तद्वदुत्तरे प्लव एव च॥
एवमेव महादेवि! ते सर्वे कामपालकाः।
एवन्ते कथितं देवि! सौमारचरितं हि तत्॥
इतः किमिच्छसि श्रोतुं यत्त्वया नैव संश्रुतम्।

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्र्ये पञ्चदशः पटलः।

---

## अथ षोड़शः पटलः।

श्रीदेव्युवाच। श्रुतं हि पूर्ववृत्तान्तं सर्वेषामप्यगोचरम्।
इदानीं श्रोतुमिच्छामि कालीरूपाऽभवत् कथम्॥

ईश्वर उवाच।

शृणु देवि! परं गुह्यं ब्रह्मादीनामगोचरम्।

सारात् सारतरं देवि ! भक्तिमुक्तिप्रदायकम् ॥
एकदा ब्रह्मविष्णू तौ विरोधन्तौ परस्परम् ।
ईश्वरोऽहमीश्वरोऽहमुक्तवन्तौ जलार्णवे ॥
तयोः शान्त्यै महेशानि ! प्रादुर्भूतं जलार्णवे ।
अप्रमेयं महालिङ्गं मदीयं पावनं परम् ॥
ज्ञानाज्ञानमयं दिव्यं दुर्निरीक्ष्यं भयङ्करम् ।
तन्मध्येऽहं रुद्ररूपो वभ्राम वृषवाहनः ॥
तौ दृष्ट्वा तु तदाश्चर्य्यं भयकल्पितविग्रहौ ।
स्तुत्वा च विविधैः स्तोत्रैरूचतुर्मां पुनश्च तौ ॥

ब्रह्मविष्णू ऊचतुः ।

इत्युदीरितमाकर्ण्य स्थगितौ ब्रह्मकेशवौ ।
निगूढ़ं ध्यानतो ज्ञात्वा सन्तुष्टो माधवोऽभवत् ॥
उद्विग्नमानसो ब्रह्मा ध्यात्वा मज्ज्ञानमाप्तवान् ।
केवलं रुद्ररूपं मां ज्ञात्वाऽसौ कमलासनः ॥
विचिकित्सापरो भूत्वा विष्णुमाह तदा विधिः ॥

ब्रह्मोवाच ।

भो विष्णो ! मत्कपालाद् यो जातो रुद्रोऽप्यसौ मतः ।

ईश्वर उवाच ।

एवमुक्त्वा चोपहासं कृत्वा धात्रा विगर्हितम् ।
चकार बहुधा देवि ! विघ्नं दत्तं सुदारुणम् ॥
मया तस्मै ब्रह्मणे तद्विगर्हितविनिर्मितम् ।
तद्विघ्नमसुरो भूत्वा मध्याह्नसमये रविः ॥
जातो देहात् स त्रिपुरनाम्नाऽपि दानवः शिवे ! ।
सर्वेषां सकलं नीतमिन्द्रादीनां महेश्वरि ! ॥
तेन दैत्येन देवेशि ! ततो विष्णोर्हि तत् जगत् ।
गरुड़श्च विना लक्ष्मीमन्यत् सर्वं हृतं बलात् ॥

हृतं तेनैव दैत्येन ब्रह्मणः कमलासनम् ।
ततः पलायिता देवा ब्रह्मविष्णुपुरोगमाः ॥
हिमालयं समासाद्य विष्णुराह तदा विधिम् ॥
विष्णुरुवाच । शिवनिन्दा कृता धातस्त्वया पूर्वं जलार्णवे ।
तेनैव चापराधेन वयं सर्वे प्रपीड़िताः ।
ततस्तु परमेशानं स्तोष्यास्यत्र गिरौ पुनः ॥
तदैव मङ्गलं लेभे भूयो मे रोचते हृदि ॥

ईश्वर उवाच ।

समाश्रित्य तपस्तेपुर्ब्रह्मविष्णुपुरोगमाः ।
हिमालये तदा देवाः प्रसादो मेऽभवत् तदा ॥
पृथिवीञ्च रथं कृत्वा चक्रे चन्द्रदिवाकरौ ।
ब्रह्माणं सारथिं कृत्वा वेदान् रज्जूंस्तथैव च ॥
देवान् कृत्वा रथाङ्गानि अश्वांश्चैव रथान् पुनः ।
धनुः कृत्वा सुमेरुञ्च ज्याञ्च कृत्वा तु वासुकिम् ॥
विश्वञ्च सकलं कृत्वा रथस्थं यच्चराचरम् ॥
वाणं विष्णुं विधायैव त्रिपुरं भस्मसात् कृतम् ।
चराचरेण सहितं देवदैत्यादिभिः सह ॥
मया तत्र महेशानि ! पुनः सृष्टिः कृता ततः ।
यत्र भस्म कृतं देवि ! जगदेतच्चराचरम् ॥
महत् श्मशानन्तु विद्धि सर्वेषां लयकारणम् ।
मृतानां सर्वदेवानां तेजस्तत्र व्यवस्थितम् ॥
पञ्चक्रोशात्मकं भूत्वा तेजस्तु जगतां तथा ।
निर्माय मायया देहं त्रैपु ं तस्य वक्षसि ॥
तत्र मृत्युच्छलेनाहं तुष्टाव परमेश्वरीम् ।
तत्तेजसि महाकाल्याः परा चैतन्यरूपिणी ॥
ततस्तेजसि सा काली प्रादुर्भूता परा कला ।

महादीपप्रमाणन्तु तेजः कालीति कीर्त्तितम् ॥
मुखमात्रं समादृष्टं महाकाल्यास्तु तेजसि ।
अतो गिरिमुखं नाम मुनिभिः परिगीयते ॥
तद्दृष्ट्वा परमेशानि ! आनन्दश्चैव जायते ।
आनन्दकाननं तस्माद् गीयते वेदवादिभिः ॥
कालीमयं हि तत्तेजः सकलं संबभूव ह ।
यथा तु सागरे गच्छन् शीकरः सागरो भवेत् ॥
तथा सूर्य्यादितेजो हि कालीतेजो बभूव ह ।
यथा नानाजलं देवि ! गङ्गायां पतितं यदि ॥
गङ्गैव जायते सर्वं तथा तेजः सुरेश्वरि ! ।
सर्वं काल्यभवत् पूर्णं नास्ति भेदो महेश्वरि ! ॥
सर्वं तदमृतं देवि ! जानीहि सुरसुन्दरि ! ।
तामसीमनिशं देवि ! शिरसा धारयाम्यहम् ॥
ततो हि शङ्करत्वं मे निश्चितं सत्यमेव हि ।
तां कालीं शिरसाधाय पञ्चक्रोशमयीं सदा ॥
अहर्निशं पूजयामि परमानन्दबृंहितः ।
अतो विश्वेश्वरत्वं मे सदैव नात्र संशयः ॥
ब्रह्मविष्णादिकानाञ्च ईश्वरो यः सुरेश्वरि ! ।
विश्वेश्वरः स एव स्यान्नापरः परमेश्वरि ! ॥
केवलानन्दवान् भूत्वा पूजयामि परं सदा ।
तत्र तस्याः कृपा जाता वाग्भवा याऽघ्नरोधिनी ॥
श्रीदेव्युवाच । भो देव ! परमानन्द ! ममानन्दः कृतस्त्वया ।
अतः काश्यां मृतानां त्वमनिर्वाणं देहि सर्वदा ॥

ईश्वर उवाच ।

इति श्रुत्वा वचस्तस्या सद्योऽहममृतार्णवे ।
ददामि परमं ब्रह्म सुपर्णैः कर्णगोचरे ॥

वाराणस्यां सदा देवि ! स्थित्वा ध्यानपराः शिवे ! ।
जले स्थले चान्तरीक्षे वाराणस्यां मृतास्तु ये ॥
ददामि परमं ब्रह्म तेषां हि कर्णगोचरे ।
हित्वा हि सकलं कर्म सुकृतं दुष्कृतं हि ते ।
प्राप्स्यन्ति ब्रह्म निर्वाणं ममोपदेशतः क्षणात् ॥
तत् सर्वं सुकृतं कर्म दुष्कृतं वा महेश्वरि ! ।
भवेद्भस्म महाकाल्याः प्रसादात् ज्ञानयोगतः ॥
काशीलग्नं हि यत्किञ्चित् काशी भवति तत्क्षणात् ।
काशीस्पर्शनमात्रात् ते पूर्णानन्दमयाः सदा ॥
शूली कर्म दहेत् काशीतेजःस्पर्शात् क्षणात्तथा ।
तूलराशिं दहेत्त्वग्निः किञ्चित्कालाद्यथा शिवे ! ॥
तथा दहेत् कर्मराशिं काशीजन्मैकतो नृणाम् ।
काशीस्थानं पुण्यचयं किं वाहं कथयामि ते ॥
अपि चेत् त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत् ।
तदा काशीफलं किञ्चिद् देवि ! वक्तुं क्षमो भवेत् ॥
अण्डजा उष्मजाश्चैव उद्भिज्जाश्च जरायुजाः ।
ते सर्वे मुक्तिमायान्ति काश्याञ्चेद् भाग्यतो मृताः ॥
इयं वाराणसी देवि ! महातेजोमयी शुभा ।
युगभेदाज्जनैरेव दृश्यते हि चतुर्विधा ॥
कृते रत्नमयी काशी त्रेतायां स्वर्णजा स्मृता ।
द्वापरे सा शिलारूपा कलौ भूमिमयी शुभा ॥
नातःपरतरं क्षेत्रं त्रिषु लोकेषु विद्यते ।
सत्यं सत्यं महादेवि ! शपथेन वदामि ते ॥
संसारवर्त्मना देवि ! मुक्तिमिच्छति यः पुनः ।
पाषाणेश्वरलोभित्वात् तिष्ठेत् काश्यां स यन्त्रितः ॥
स एव पण्डितो ज्ञानी स एव कुलपावनः ।

प्राणान्तेऽपि महादेवि ! काशीं न निस्त्यजेद् बुधः ॥
स एव परमो मूर्खः स एव कुलनाशकः ।
वृथैव मूर्खलोकेन काशीं प्राप्य समुज्झितम् ॥
बहुभिर्जन्मभिः पुण्यैर्यदि काशीं लभेत् जनः ।
तदा नैव त्यजेत् काशीं प्राणान्तेऽपि कदाचन ॥
अनायासेन संसारसागरं यस्तितीर्षति ।
स गच्छेदपि यत्नेन मम वाराणसीं पुरीम् ॥
अन्नं दद्यादन्नपूर्णा ज्ञानं दद्यात् सरस्वती ।
प्राणान्ते मुक्तिदाताऽहं काश्यां स्थित्वा सदैव हि ॥
एवन्ते कथितं देवि ! यत् पृष्टं गिरिजे ! मयि ।
परमं पावनं मोक्षं किमतः श्रोतुमिच्छसि ॥

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्र्ये षोड़शः पटलः ।

---

## अथ सप्तदशः पटलः ।

श्रीदेव्युवाच । गुरुस्त्वं सर्वलोकानां परमेश ! पुरातन ! ।
जगद्वन्द्य कलाधीश ! वद कोलानिपातनम् ॥

ईश्वर उवाच ।

शृणु देवि ! प्रवक्ष्यामि कोलासुरनिपातनम् ।
महाकालीप्रसङ्गेन वृत्तान्तमिदमद्भुतम् ॥
पापं जातं ब्रह्मशापाद् विष्णोरतुलतेजसः ।
पीड़ितस्तेन पापेन तपश्चक्रे स सर्ववित् ॥
हिमालयान्तिके गत्वा तत्पापक्षयकात्मकः ।
अष्टाक्षरीं महाविद्यां महाकाल्याः सदा जपन् ॥

दशवर्षसहस्रान्ते तुतोष सा महेश्वरी ।
तस्याः सन्तोषमात्रेण विष्णोर्हृदयपङ्कजात् ॥
कोलानामासुरो भूत्वा निर्गतः सहसा हि सः ।
तेन दैत्येन बलिना सर्वं नीतं दुरात्मना ॥
इन्द्रादिसकलान् देवान् विनिर्जित्य महासुरः ।
हृत्वा च वैष्णवं धाम ब्रह्मणः कमलासनम् ॥
इदानीं रे वत्स ! विष्णो ! हन्मि कोलान् सबान्धवान् ।
कोलानगरमास्थाय कुमारीरूपमास्थिता ॥

ईश्वर उवाच ।

एवं श्रुत्वा कोलावाणीं ब्रह्मविष्ण्वादयः सुराः ।
आनन्दजलधौ मग्नाः शिखिवन्नन्टतुर्घनात् ॥
अतः काली करालास्या द्विजबालास्वरूपतः ।
गत्वा कोलापुरं देवि ! कोलासुरसमीपतः ॥
तमयाचत तद्भक्ष्यं कुमारी दैत्यपुङ्गवम् ॥

काल्युवाच ।

मातृतातविहीनाहं सहायपरिवर्जिता ।
क्षुधिताहं महाराजन् ! भोज्यं मह्यं प्रदीयताम् ॥

ईश्वर उवाच ।

ततः कोलासुरो देवि ! मायया परिमोहितः ।
दयया तां करे धृत्वा विवेशान्तःपुरे स्वयम् ॥
उवाच भोज्यं दास्यामि तुभ्यं यत्ते स्वभीप्सितम् ।
अत्रोपविश बाले ! त्वं आसने मणिरञ्जिते ॥
इत्युक्त्वासौ ददौ भोज्यं नानाविधमनेकशः ।
भुक्त्वा सा सकलं देवि ! पुनर्देहीतिवादिनी ॥
पुनर्ददौ बहुतरं तच्चापि बुभुजे स्वयम् ।
नाहं तृप्ता वदन्तीं तां कोलोवाच तदाऽसुरः ॥

यथा तृप्तिर्भवेद् बाले ! तावच्च तत्तथा कुरु ।
इत्युदीरितमाकर्ण्य काली बालास्वरूपिणी ॥
कोषं हयं हस्तिनञ्च रथं सैन्यं सबान्धवम् ।
क्षणेन बुभुजे काली कोलासुरं महाबलम् ॥
कालरुद्रो यथा काले क्षणाद्युगलयं नयेत् ।
तथा कोलापुरं शून्यं कृतं काल्या क्षणाच्छिवे ! ॥
हतारयस्ततो देवा ब्रह्मविष्णुमुखास्तथा ।
निरन्तरं पुष्पवृष्टिं चक्रुस्ते ननृतुः परम् ॥
जगुः सुललितं गीतं देवगन्धर्वकिन्नराः ।
विद्याधरीदेवपत्नीकिन्नरीभिः समन्ततः ॥
पूजितास्तैः कुमारी सा कुसुमैर्नन्दनोद्भवैः ।
सर्वलोकैः पूजिता च कुमारी सा गृहे गृहे ॥
ततः साऽन्तर्हिता देवी कुमारी ब्रह्मविग्रहा ।
एवं तेऽद्य मया प्रोक्तं कोलासुरनिसूदनम् ॥
ब्रह्मशापो दुराधर्षः कोऽप्यतस्तं न चाचरेत् ।
वाग्वज्रञ्च ब्राह्मणानां सदा जानीहि कामिनि ! ॥
अतोऽविद्यः सविद्यो वा ब्राह्मणः सर्वदा भवेत् ।
सन्तोष्य ब्राह्मणान् देवि ! तुष्टा वयं सदा सुराः ॥
वितुष्टे ब्राह्मणे देवि ! वितुष्टा वयमेव हि ।
यद्यकार्य्यशतं देवि ! ब्राह्मणः स्वयमाचरेत् ।
आत्मनो हितकामेन तथापि तं न चोत्सृजेत् ।
नापमानश्च कर्त्तव्यः सर्वदा सुरपुङ्गवे ॥
ब्राह्मणः सर्वदेवात्मा मोक्षतेजःसमो हि सः ।
अप्रसूतिश्च सा काली कुमारीरूपधारिणी ॥
ततःप्रभृति देवेशि ! कुमारी पूज्यते सुरैः ।
ब्रह्मविष्णुमहेशाद्यैः कुमारी पूज्यते सदा ॥

अन्यैः सर्वैः प्रपूज्येत ब्रह्माण्डतलगोचरैः ।
कुमारीपूजनफलं वक्तुं नार्हामि सुन्दरि ! ॥
जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि ।
तस्माच्च पूजयेद् बालां सर्वजातिसमुद्भवाम् ॥
जातिभेदो न कर्त्तव्यः कुमारीपूजने शिवे ! ।
जातिभेदान्महेशानि ! नरकान्न निवर्त्तते ॥
विचिकित्सापरो मन्त्री ध्रुवञ्च पातकी भवेत् ।
देवीबुद्ध्या महाभक्त्या तस्मात्तां परिपूजयेत् ॥
सर्वविद्यास्वरूपा हि कुमारी नात्र संशयः ।
एका हि पूजिता बाला सर्वं हि पूजनं भवेत् ॥
यदि भाग्यवशाद्देवि ! वेश्याकुलसमुद्भवाम् ।
कुमारीं लभते कान्ते ! सर्वस्वेनापि साधकः ॥
यत्नतः पूजयेत्तान्तु स्वर्णरौप्यादिभिर्मुदा ।
तदा तस्य महासिद्धिर्जायते नात्र संशयः ॥
महासिद्धिर्भवेदस्य स एव श्रीसदाशिवः ।
लक्षणं तस्य वक्ष्यामि तच्छृणुष्व प्रियंवदे ! ॥
सद्यस्तस्य महेशानि ! काञ्चनं परिजायते ।
सर्वसिद्धियुतो भूत्वा क्रीड़ते भैरवो यथा ॥
स्वर्गे मर्त्ये च पाताले गतिस्तस्य सुनिश्चितम् ।
हठात्तु जायते सर्वं यद्यन्मनसि वर्त्तते ॥
कायव्यूहं समासाद्य सर्वत्र व्यापको भवेत् ।
अव्याहताङ्गः सर्वत्र यथा सुन्दरः शिवे ! ॥
देवदानवगन्धर्वनागकिन्नरकामिनी ।
विद्याधरी राजनारी सेवते तं दिवानिशम् ॥
अन्ते च प्राप्यते तेन परं निर्वाणमुत्तमम् ।
कुमारीपूजने काले साधकः शिवतां व्रजेत् ॥

कुमारी पूज्यते यत्र स देवः क्षितिपावनः।
महापुण्यतमं भूयात् समन्तात् क्रोशपञ्चकम् ॥
कुमारीपूजने तत्र कुर्य्याच्च परमेश्वरि !।
स्फुरत्येव महज्ज्योतिः प्रत्यक्षं भारते भुवि ॥
विश्वम्भरो नाम राजा चैत्रवंशसमुद्भवः।
अपूजयत् कुमारीं तां वेश्याकुलसमुद्भवाम् ॥
काञ्चीनाम्नीं कृष्णवर्णां सर्वलक्षणपूरिताम्।
पूजाकाले महादेवि ! काञ्ची जाता स्फुरत्प्रभा ॥
तत्प्रभापटलाच्छन्नो राजा मोक्षमवाप्तवान्।
सम्यक् प्रपूरिता तत्र काञ्ची ज्योतिर्मयी प्रभा।
भूत्वा नित्या हि तत्स्थाने गृह्णाति पूजनं सदा ॥
काञ्चीनाम्नी पुरी जाता तत्स्थानन्तु महाफलम्।
मोक्षदा सा पुरी ज्ञेया पञ्चक्रोशमयी शुभा ॥
गृहव्यापारादिकञ्च तत्र यद्यत् कृतं भवेत्।
तत् सर्वं पूजनं तस्याश्चित्रमेतन्नगेन्द्रजे ! ॥
अथ काञ्चीपुरी देवि ! युता वाराणसी शुभा।
एवन्तु पूजिता बाला काम्पिल्लेन महात्मना ॥
काम्पिल्ले नगरे पूर्वं तामुद्भूत्य वरानने !।
अद्यापि दृश्यते लोके शिलारूपेण तिष्ठता ॥
सर्वपुण्यतमं वासं सर्वतीर्थसमाकुलम्।
सर्वयज्ञयुतं देवि ! महर्षीणाञ्च वेष्टितम् ॥
सर्वाश्चर्य्यसमाक्रान्तं काम्पिल्ले नगरे परम्।
ये वसन्ति महादेवि ! काम्पिल्लनगरे पुरे ॥
इह भुक्त्वा वरान् भोगान् मम तुष्टिप्रदायकान्।
सर्वसम्पत्समाकीर्णानन्ते देव्याः प्रसादतः ॥
उल्लङ्घ्य ब्रह्मलोकं वै देव्याः स्थानं समाप्नुयुः।

यदि कामी भवेत् कोऽपि वैकुण्ठं परमं व्रजेत् ॥
मल्लोकं वा महेशानि ! यथा मे मणिमन्दिरम् ।
एवं तेऽद्य मया प्रोक्तं कुमारीचरितं शिवे ! ॥
किञ्चिदेव महामाये ! पुनः किं परिकथ्यते ॥

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्रे सप्तदशः पटलः ।

---

## अथ अष्टादशः पटलः ।

श्रीदेव्युवाच । श्रुतं कुमारीचरितं पूर्वं हि देववाञ्छितम् ।
इदानीं श्रोतुमिच्छामि कहोलचरितं परम् ॥
आज्ञापय महादेव ! कृपया परया हि तत् ।
हितं हि सर्वलोकानां योगिनां हृदयार्थदम् ॥
ईश्वर उवाच । वेदवेदान्तवेदाङ्गसर्वशास्त्रस्वरूपभाक् ।
सर्वयागी सर्वतीर्थपूतः सर्वाघवर्जितः ॥
सर्वविद्यासर्वमन्त्रज्ञातां सिद्धऋषीश्वरः ।
सर्ववर्य्य ऋषिश्रेष्ठः परिबभ्राम मेदिनीम् ॥
चिन्तामवाप महतीमतीवोद्विग्नमानसः ।
सहस्रसूर्य्यसङ्काशः स एवासीत् पुरा शिवे ! ॥
चिन्तया परया सोऽभूत् परिव्याप्तो निरन्तरम् ।
तदाकाशसमुद्भूता श्रुता वाणी महर्षिणा ॥
कहोल ! याहि पूर्वं त्वं शङ्करं देवशङ्करम् ।
स गुरुः सर्वसत्त्वानां सकलं ते करिष्यति ॥
श्रुत्वा तां गागनीं वाणीं परमानन्दसंप्लुतः ।
गत्वोवाच कहोलोऽसौ वृत्तान्तं सकलं हि तम् ॥

ततस्तस्मै मया दत्ता विद्या काली परा कला ।
चन्द्राचारी सर्वज्ञानभानवी चिन्मयी शुभा ॥
दत्तश्च परमाचारः श्रीमदागमसम्भतः ।
कथितश्च मया तस्मै कहोल ! पुत्र ! तच्छृणु ॥
अनेनाचारयोगेन गत्वा कालीं दिगम्बरीम् ।
भावयित्वा पूजयेद् यः सर्वाज्ञानविनाशिनीम् ॥
ततस्ते संशया नष्टा भवेयुर्भुवनेश्वरि ! ।
इत्याज्ञप्तः कहोलः स ऋषिर्वेदविशारदः ॥
गत्वा काशीं यजेत् कालीं पञ्चाचारयुतो मुदा ।
तस्य ते संशया विघ्नाः पलायन्ते दिने दिने ॥
ऋषेस्तस्य,कहोलस्य वेदमूर्त्तेर्महामतेः ।
ततस्तस्मिन् कृपा जाता महाकाल्या ऋषेः शुभा ॥
तथा च कृपया देवि ! कहोल ऋषिसत्तमः ।
आत्मानं कालिकारूपं परं ब्रह्म सनातनम् ॥
जज्ञौ मायाविनिर्मुक्तमद्वैतं परमं शिवे ! ।
सर्वमायाविनिर्मुक्तो जातः स ऋषिरुत्तमः ॥
सर्वं ब्रह्ममयं दृष्ट्वा जगदेतच्चराचरम् ।
आत्मदेहादिकं किञ्चिज्जानाति न च कर्हिचित् ॥
तेनैव ब्रह्मज्ञानेन देहकर्मादिकं खलु ।
भस्मीभूतं महेशानि ! ऋषेस्तस्य महात्मनः ॥
ब्रह्मभूतः कहोलर्षिर्महाकाल्याः प्रसादतः ।
अत्याचारेषु सर्वेषु रतः स्यात् स्फुरते हि सः ॥
एवमेव महाकाल्या कहोल ऋषिराट्टतः ।
चकार दीनं तमृषिं स्वीयदेहे तु कारणे ॥
यं यं भावमुपाश्रित्य यजेत् कालीं हि साधकः ।
प्राप्नुयादचिरादेव महाकाल्याः प्रसादतः ॥

श्रीदेव्युवाच । श्रुतं कल्लोलचरितं पूर्वं विस्मयकारकम् ।
देवासुरमुनीन्द्राणामृषीणां भावितात्मनाम् ॥
इदानीं श्रोतुमिच्छामि गङ्गां त्रैलोक्यपावनीम् ।
कां विद्यां प्राप्य सा जाता तां वदस्व मयि प्रभो ! ॥

श्रीईश्वर उवाच ।

शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
श्रवणात् सर्वपापानि नाशमायान्ति नान्यथा ॥
मन्त्रमादौ प्रवक्ष्यामि त्रैलोक्यपावनाभिधम् ।
महादेव्या महाकाल्या महादेवेन भाषितम् ॥
निजबीजं समुद्धृत्य सम्बोधनपदद्वयम् ।
पुनश्च निजबीजं हि विद्यायशस्करी परा ॥
एनां विद्यां समाराध्य गङ्गा त्रैलोक्यपावनी ।
मम जटातटे स्थित्वा जपेद्विद्यामहर्निशम् ॥
तेन सा पावनी गङ्गा मोक्षदा सर्वदेहिनाम् ।
सिद्धमन्त्रस्वभावेन कालीतेजोऽतिबृंहिता ॥
अतः सा पावनी भूत्वा मोक्षदा स्यात् शिवे ! सदा ।
अतो हि सर्वतीर्थानां सा विद्या सर्वपूजिता ॥
माहात्म्यं किमु वक्ष्यामि गङ्गायाश्च सुरेश्वरि ! ।
यन्नामस्मरणादेव पापिनो मुक्तिभागिनः ॥
गङ्गा गङ्गेति यो ब्रूयात् पापिनामपि पातकी ।
तेषाञ्च पातकं हित्वा स गच्छेच्छैवीं पुरीम् ॥
यानि कानि च पापानि प्रोक्तानि ते महेश्वरि ! ।
प्रायश्चित्तविहीनानि प्रायश्चित्तपराण्यपि ॥
तानि सर्वाणि नश्यन्ति गङ्गाजलाभिषेकतः ।
नगरीं यां सदा देवि ! शुभा गङ्गा प्रवाहयेत् ॥
सर्वं गङ्गा भवत्येव मन्त्रमाहात्म्यतः शिवे ! ।

यत्र देशे वसेद्गङ्गा स देशः पुण्यभाजनः ॥
पुण्यक्षेत्रं समुद्दिष्टं पवित्रं योजनद्वयम् ।
तत्र यत् क्रियते कर्म्म गङ्गायां नात्र संशयः ॥
गङ्गायां यत् कृतं देवि ! तदक्षयफलं भवेत् ।
सङ्गमं वा विहीनं वा कथितं शम्भुवल्लभे ! ॥
तत्रस्थाः प्राणिनः सर्व्वे देवलोकविनिःसृताः ।
भुक्त्वा च विविधान् भोगान् कृत्वा च सुकृतं सदा ॥
अनायासेन यास्यन्ति स्थानं परमदुर्लभम् ।
यत्र गङ्गाप्रवाहोऽस्ति देवर्षिगणसंस्तुते ! ॥
गङ्गायां त्यजते प्राणान् यस्तु पुण्यस्वभावतः ।
ज्ञानतो मोक्षमाप्नोति वैकुण्ठं तत्प्रभावतः ॥
स्वर्लोकाद्या महेशानि ! गङ्गा पापविनिर्जिता ।
गङ्गामुद्दिश्य यो गत्वा पथि प्राणान् विमुञ्चति ॥
विष्णुलोकं बहुगुणं पापी चेत् सोऽपि गच्छति ।
तत्तीरे यस्त्यजेत् प्राणान् न्यायतोऽन्यायतोऽपि वा ॥
सोऽपि स्वर्गमवाप्नोति सर्व्वसम्भारसंयुतम् ।
यावदस्थीनि गङ्गायां निक्षिप्यन्ते मृतस्य च ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
गङ्गाजलसमायोगान्म्रियते यत्र कुत्रचित् ॥
सर्व्वपापविनिर्म्मुक्तो विष्णुलोके महीयते ।
गङ्गातीरे चतुर्हस्ते पिण्डं दद्यात् समाहितः ॥
पितृणां निष्कृतिं कृत्वा विष्णु लोके वसेन्नरः ॥
गङ्गायां तर्पणं देवि ! पुण्यवान् यः समाचरेत् ।
महातृप्तिर्भवेत् सत्यं पितृणाञ्च शताब्दिकम् ॥
ऋषीणां देवतानाञ्च तथैव समुदाहृतम् ।
दिवा वा यदि वा रात्रौ सन्ध्यायां वा महानिशि ॥

स्नानं दानं तपो होमं तर्पणं पूजनं शिवे ।।
सर्वं कुर्य्यात्तु गङ्गायां कालभेदं न चाचरेत् ॥
कालभेदं समाचर्य्य यदि कर्म त्यजेत् शिवे ! ।
ततस्तु स्थावरो भूयादरण्ये तदनन्तरे ॥
दावाग्नीनां शिखा तस्य दग्ध्वा मृतन्त्वनेकधा ।
तदन्ते परमेशानि ! चाण्डालो नित्यदुःखितः ॥
जायते सप्तजन्मानि तदन्ते रजको भवेत् ।
जन्मत्रयं महेशानि ! तदन्ते शूद्रयोनिषु ॥
दशजन्म महेशानि ! ततो वैश्यत्वमाप्नुयात् ।
चतुर्जन्मव्यतीते तु क्षत्रियत्वं त्रिजन्मतः ॥
ब्राह्मणत्वं ततः प्राप्य लभेत् पुण्यगतिं नरः ।
गङ्गायां हरते यो हि यत्किञ्चित् परमेश्वरि ! ॥
तस्य मोहान्धतमसो रौरवान्नास्ति निष्कृतिः ।
आभूतसंप्लवं देवि ! कथितं ते सुरेश्वरि ! ॥
तस्यास्तीरे च गङ्गायाः प्रतिगृह्णाति यो नरः ।
श्वपचो जायते नित्यं दशजन्मानि कामिनि ! ॥
ततो दारिद्र्यदोषेण परिभ्रमति मेदिनीम् ।
सप्तजन्म महादेवि ! तदन्ते निष्कृतिं लभेत् ॥
एवन्ते कथितं तस्या मन्त्रमाहात्म्यमुत्तमम् ।
कालिकाया महेशानि ! गङ्गामाहात्म्यकारणम् ॥

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-

साहस्रे अष्टादशः पटलः ।

---

## अथ ऊनविंशः पटलः ।

श्रीदेव्युवाच । भो देव ! परमानन्द ! करुणामयवारिधे ।।
अपारे घोरसंसारे पतितानां महार्णवे ॥
यो मतः कः समुद्धर्त्ता चास्ते ब्रह्माण्डमण्डले ।
गुरुस्त्वं सर्वसत्त्वानां ब्रह्मादीनां यतो भवान् ॥
पृच्छामि त्वामतो नाथ ! कृपया परया वद ।
श्रुतं सर्वं जगन्नाथ ! त्वन्मुखाम्भोजनिर्गतम् ॥
इदानीं श्रोतुमिच्छामि यत्र मे मानसं गतम् ।
कां विद्यं समुपाश्रित्य करालभैरवः स्वयम् ॥
क्रोधवह्नी भैरवोऽभूत् सर्वसत्त्वभयप्रदः ।
विद्रवन्ति भयार्त्ता वै यस्माद्देवासुरादयः ॥
स्वां स्वां श्रियञ्च सत्त्वञ्च पलायन्ते इतस्ततः ।
तां विद्यां श्रोतुमिच्छामि वद नाथ ! दिगम्बर ! ॥
ईश्वर उवाच । अतिगुह्या महाविद्या गुह्याद्गुह्यतरा हि सा ।
ब्रह्मविष्णुशिवादीनां सर्वस्वं जीवनावधि ॥
कथितुं नैव शक्नोमि तां विद्यां परमेश्वरि ।।
कथ्यते नाममात्रं हि ज्ञायतां कुलभैरवि ! ।
यत्र वै परमेशानि ! सुन्दरी वरदायिनी ॥
विद्या राज्ञी घोरकाली अनिरुद्धसरस्वती ।
गृहीत्वा तां महाविद्यामादिनाथः स भैरवः ॥
महाकालभैरवाद्यैर्यद्गुरोः श्रीमुखाच्छिवे ! ।
प्राप्तिमात्रान्महादेवि ! करालभैरवः सदा ॥
मेने स पूतमात्मानं सर्वस्मादधिकं स्वयम् ।
सर्वसंसारनिर्मुक्तो ब्रह्मादिसुरवन्दितः ॥
स तूदयाचले पूर्वं तपस्तेपेऽतिदुष्करम् ।

भूत्वार्द्धचरणो देवि ! वर्षाणां नियुतद्वयम् ॥
हिमाचले चैकलक्षं लक्षञ्च मन्दराचले ।
कनकाश्रमे तथा लक्षमुड्डीयाने द्विलक्षकम् ॥
पञ्चविंशतिलक्षञ्च तथा जालन्धरे शिवे ! ।
पुण्यशैले तथा लक्षं पञ्चविंशतिमानत: ॥
पञ्चविंशतिलक्षञ्च कामाख्यायोनिमण्डले ।
एवं तप्तं तपोह्येवं कोटिवर्षं सुदुष्करम् ॥
कष्टेन महता देवि ! करालभैरवेण ते ।
तथापि तं प्रति प्रीता माभूत् काली कदाचन ॥
तत: स भैरवो देवि ! गुरोरन्तिकमन्वगात् ।
निवेदयामास तथा वृत्तान्तं तपस: शिवे ! ॥
श्रुत्वा श्रीमदादिनाथो महाकालो महेश्वर: ।
मन्नाथ: परमेशानि ! भावनावशतां गत: ॥
विना च परमाचारं न हि सिद्धिर्भवेत् किल ।
कथं त्वां परमाचारं कथयामि समासत: ॥
स एव परमाचार: कालीहृदयसङ्गत: ।
गुह्यातिगुह्यगुह्येति ब्रह्मादीनामगोचर: ॥
परो मुक्तिप्रद: साक्षात् सर्वसिद्धिवरप्रद: ।
कालीप्रत्यक्षबीजोऽयं मम सर्वस्व एव च ॥
केवलं कथितं सर्वं शिवेन मत्समो भवेत् ।
सत्त्वशान्तो महायोगी गोपितस्तेन यत्नत: ॥
आचारार्थं स्वीयपादं कालरुद्रे समर्पितम् ।
मम स्वस्वपदं शम्भुर्निरुद्वेगोऽप्यचेतस: ॥
परं सङ्गोप्यते नैव तथाचारं समाचरेत् ।
सदाचारस्य निगूढं तत्त्वज्ञानं महामति: ॥
सर्वेषामधिपो भूतो विश्ववन्द्य: सदाशिव: ।

अजरामरतां प्राप्तो महाशान्तः परेश्वरः ॥
तदाचाररतं नित्यं शान्तं दृष्ट्वा मया पुनः ।
पदं मदीयं गुरुतां दत्त्वा तस्मै समासतः ॥
अहन्तु तस्य देहे वै तिष्ठामि सर्वदा मुदा ।
सर्वेषान्तु सहस्रारे तिष्ठामि कमले परे ॥
शिवस्य सकलं प्राप्य तिष्ठामि सर्वदा ह्यहम् ।
शिवः शिवोऽहन्तु शिवो न भेदः कुत्रचित् सदा ॥
ब्रह्मविष्णुशिवादीनां गुरुर्यत्र ततः शिवः ।
सोऽपि शान्तो महायोगी आचारक्षम एव सः ॥
नान्यः कश्चित् क्षमः क्वापि तदाचारः कदाचन ।
शिवस्य कृपया चैव केवलं साधकः क्षमः ॥
क्षमा गिरिसुता देवी नान्यः कश्चित् कदाचन ।
ऊर्द्धतोऽयं भीमकर्मा करालभैरवः सदा ॥
तमेव परमाचारं विद्यान्नास्य तमो भवेत् ।
यथा मे कालिकाराध्या तथाचारोऽयमेव हि ॥
विद्याराज्ञीं समाराध्यां दातुं योग्यः कदाप्यहम् ।
योग्यो न परमाचारं दातुं कालीहृदङ्गमम् ॥
इति सम्भाव्य मन्नाथः करालभैरवं प्रति ।
आज्ञापयामास गच्छ पुत्रि ! त्रिलोचनं प्रति ॥
देवी शिवं समारुह्य तथापि करुणामयि ! ।
याता मातुः कालिकायास्ततः स भैरवः स्वयम् ॥
त्यक्त्वा तपस्तु सकलं भावयन्नन्तरात्मना ।
यद्यज्जप्तं तपो ह्येवं यातु यातु वृथा हि तत् ॥
मम भाग्यवशात् सा हि गुर्वाज्ञा विफला भवेत् ।
अतः शरीरं त्यक्ष्यामि न वक्ष्यामि कदाचन ॥
प्रतिज्ञामीदृशीं कृत्वा देहं सन्त्यक्तुमुद्यतः ।

तदाकाशसमुद्भूता वाणी सेयं समीरिता ॥
श्रुत्वा तेन करालेन भैरवेण महात्मना।
तामाज्ञां कथयामीशे ! श्रुत्वा कर्णे तवांशजम् ॥
गुर्वाज्ञा विफला यातु तव वै भैरवोत्तमः।
विनाचारं तपस्तप्तं त्वयात्मज्ञानतः सदा ॥
कथं तुभ्यं महासिद्धिं दर्शनं वा ददास्यहम्।
पुनर्याहि महाकालभैरवं भवनाशनम् ॥
आदिनाथं तव गुरुं वृत्तान्तं कथयेदृशम्।
तदावश्यं महाचारं तुभ्यं स तु प्रदास्यति ॥
तेनैवाचारतो देव ! ममाराधनसुव्रत !।
अचिरात्तं प्रदास्यामि यद्यन्मसि वर्त्तते ॥
कालीतारामहामन्त्रं शुभं मन्त्रञ्च वै ध्रुवम्।
कुलाचारं विना यो हि जपेत् स नारको भवेत् ॥
कथं सिद्धिर्भवेत् तस्य मुक्तिस्तिष्ठति दूरतः।
एवमाज्ञां महाकाल्या लब्ध्वा स भैरवोत्तमः ॥
पुनर्गत्वा च श्रीनाथं आदिनाथं महाप्रभुम्।
महाकालं महादेवं शून्यरूपं जगद्गुरुम् ॥
निवेदयामास तदा यद्यद्वाक्यं समीरितम्।
जाता कृपा महाकाल्याः करालभैरवोऽधुना ॥
इति मत्वा निन्दितः स गुरुणा शून्यरूपिणा।
तदा नियमपूर्वं हि करालभैरवोऽवदत् ॥
कुलाचारं परं गुप्तं कालीतन्त्रोदितं हि यत्।
महाकालो जगन्नाथोऽभिषिक्तं तञ्चकार ह ॥
शाक्ताभिषेकविधिना पूर्णाभिषेकतस्तथा।
ददौ नाम करालाय क्रोधवक्त्रोऽतिविश्रुतः ॥
दिव्यभावं श्रावयित्वा वीरभावं तदन्तरम्।

समदिरामत्स्यमुद्रान्तु पात्रं कारणपूरितम् ॥
ददौ तस्मै महाकालः शून्यरूपी गुरुः स्वयम् ।
तदानीं शुशुभे सर्वं जगदेतच्चराचरम् ॥
क्रोधवक्त्रोऽपि नत्वा श्रीमहाकालीपदाम्बुजम् ।
महाकालो तदा देवि ! स्मृत्वा श्रीगुरुपादुकाम् ॥
गुर्वाज्ञया भावयुक्तः स्वीकृत्य कारणं परम् ।
नष्टपापः स्थिरमनाः परमानन्दपूरितः ॥
आनन्दजलधौ देवि ! निमग्नः क्रोधभूपतिः ।
शक्तिकोपि महेशानि ! भूयो नत्वा गुरोः पदम् ॥
अस्तौषीत् परया भक्त्या संसारसागरे स्थितः ॥

क्रोधवक्त्रभैरव उवाच ।

नमामि नाथं सुरकल्पवृक्षं गुरुं चिदानन्दमहावतारम् ।
नित्यं हि विज्ञानमानन्दरूपं परात्परं ब्रह्म शिवस्वरूपम् ॥
जगन्निवासं जगदादिमूलमज्ञातमेकं परमात्मसंज्ञम् ।
तेजोमयं निष्कलतत्त्वभावं क्रियाविहीनं परमं निरञ्जनम् ॥
प्रपञ्चहीनं परिपूर्णभावमाद्यन्तशून्यं प्रकृतेः परस्तात् ।
अरूपरूपं स्फुटमेव सत्यं कृपावतारं खलु शून्यरूपम् ॥
अनादिसंसारविनाशबीजं परं पवित्रञ्च ह्यगोचरं गुरुम् ।
शिवाह्वदः केवलनाममन्त्रात् प्रकाशभावं प्रणमामि नित्यम् ॥
अणोरणीयान्महतो महीयान् प्रपश्यति त्वादिविदेव वर्ण्यः ।
यज्ज्ञानजं लोचनमेव सत्यं स च प्रविष्टस्त्वयि नाथ ! सत्यम् ॥
असारसंसारसमुद्रतारं वन्देऽहमाद्यं पुरुषं पुराणम् ।
तमेव कालीपरमार्थबीजं नमाम्यहं तच्चरणारविन्दम् ॥
स्तोत्रेणानेन यो भक्त्या त्वां स्तोष्यति च साधकः ।
प्रातर्मध्याह्नसायाह्ने तेषां मुक्तिप्रदा भव ॥

महाकालभैरव उवाच।
स्तोत्रेणानेन सन्तुष्टः सदाहं तव पुत्रक!।
गच्छ शीघ्रं योनिपीठं देवीशिखरमाश्रितः॥
भज कालीं कुलाचारभाववेश्यापरायणः।
अचिराद्वाञ्छिता सिद्धिर्भविता ते न संशयः॥
वेश्यामध्यगतं वीरं कदा पश्यामि साधकम्।
एवं वदति सा काली तस्माद्वेश्यापरो भव॥
मन्त्राचारे हि सर्वत्र नि हि दोषः कदाचन।
तस्माद्भ्रान्तिं परित्यज्य कुलधर्मं समाश्रय॥
भ्रान्तिस्तत्र न कर्त्तव्या सिद्धिहानिर्यतो भवेत्।
विशुद्धचित्तो भूयाच्चेत् सिद्धिः स्यादपराद्धगा॥
ईश्वर उवाच। ततो नत्वा महाकालीं गुरुं बहुविधं मुदा।
योनिपीठं समासाद्य देवीशिखरमाश्रितः॥
उर्वशीमेनकारम्भापञ्चचूड़ातिलोत्तमाः।
पञ्चवेश्यारतो भूत्वा कुलाचारपरायणः॥
भावशुद्धां महाविद्यां जजाप क्रोधभूपतिः।
विद्याराज्ञीं घोरकालीं अनिरुद्धसरस्वतीम्॥
अष्टोत्तरशतेनैव तस्य प्रत्यक्षतामियात्।
काली करालवदना तेजोरूपा सनातनी॥
तेजसा परिसञ्छाद्य ब्रह्माण्डमण्डलं सदा।
तद्दृष्ट्वा सुमहत्तेजो भैरवो भयविह्वलः॥
अनुपायो मूर्च्छितः सन् पपात पर्वताद् भुवि।
ततः काली जगन्माता कृपासागरसञ्चया॥
आश्वास्योवाच तं क्रोधं वाचाऽमृतसमानया॥
श्रीकाल्युवाच। समुत्थाय ततो देवीं भैरवः पुलकान्वितः।
अस्तौषीत् परया भक्त्या नानाविधविधानतः॥

मुहुर्मुहुर्ननामासौ ततः कालीमुवाच ह ॥

क्रोधवक्त्र उवाच । परं ब्रह्म परं धाम परमात्मा सनातनी ।
मनोऽभीष्टं प्रयच्छ त्वं सर्वदा मे मनोमयि ! ॥

श्रीकाल्युवाच । ब्रह्मविष्ण्वादिकानाञ्च ब्रह्माण्डेतरवासिनाम् ।
नित्यं निग्राहकस्त्वं हि भव भैरवसत्तम ! ॥
कुलाचारेण यः कोऽपि मामर्चयति पुत्रक ! ।
स मे पुत्रत्वमागच्छेत् सत्यं सत्यं न संशयः ॥
गृह्णातु वक्त्रं दास्यामि ब्रह्माण्डभयदो भवान् ।
तव वक्त्रं कालरूपं सर्वनिग्राहकं परम् ॥

ईश्वर उवाच ।

वक्त्रं दत्त्वा भैरवाय क्षणात् शान्तिमगात् शिवा ।
महाकालो भैरवोऽपि वज्रपाणिर्बभूव सः ॥
करालभैरवं रूपं क्रोधवक्त्रो बभूव सः ।
वज्रपाणिर्महाकालीप्रसादादीश्वराभिधः ॥
इति श्रीयोगिनीतन्त्रे पूर्वार्द्धं कथितं मया ।
गोपनीयं सदा भद्रे ! योनिं परनरे यथा ॥

इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति-
साहस्रे ऊनविंशतिः पटलः ।

इति श्रीयोगिनीतन्त्रे पूर्वखण्डं समाप्तम् ।

---

# उत्तरखण्डम् ।



## प्रथमः पटलः ।

ओं कामाख्यायै नमः ।

प्रधानसाधारविकल्पसत्त्वा स्वभावभावाङ्कुवनत्रयस्य ।
सा विद्यया व्यक्तमपीह माया ज्योतिःपरा पातु जगत्त्रि नित्यम् ॥
श्रीदेव्युवाच । उड्डीयानादिकं पीठं श्रुतं मे प्राणवल्लभ ! ।
इदानीं श्रोतुमिच्छामि कामरूपस्य निर्णयम् ॥
यदुक्तं मे त्वया नाथ ! घोरपापविनाशकम् ।
कामाख्यासंज्ञकं पीठं व्यक्तं कलियुगे गतम् ॥
कलिसर्पस्य दंष्ट्राणां विचित्राणां चिकित्सकम् ।
भेषजं परमं देव ! किं मे तत् कथ्यतां विभो ! ॥
श्रीभगवानुवाच । उड्डीयानस्य देवेशि ! प्रादुर्भावः कृते युगे ।
पूर्णशैलस्य सम्भूतिस्त्रेतायुगमुखेऽभवत् ॥
द्वापरे जालशैलस्य कामाख्यस्य कलौ युगे ।
घोरस्य कलिपापस्य विनाशाय महेश्वरि ! ॥
प्रतिवर्षे तव पीठमुपपीठं युगं युगम् ।
वयं वयं महाक्षेत्रं पुण्यारण्यं वयं वयम् ॥
प्रतिपीठे महादेवः प्रतिपीठे चतुर्भुजः ।
प्रतिपीठे स्थिता गङ्गा पार्वती प्रतिपीठके ॥
प्रतिपीठं प्रतिक्षेत्रं पुण्यारण्यन्तु पीठके ।
कलौ गृहात् सुदूरे च तीर्थबुद्धिः प्रजायते ॥
किन्तु तीर्थानि वै सन्ति भावनासिद्धिमन्दिरे ।

प्रतिपीठे पृथग्धर्म आचारश्च पृथक् पृथक् ॥
देशे देशे कुलाचारो न हन्तव्यश्च हेतुभिः ।
पृथक् पूजा पृथङ् मन्त्रो मर्त्ये च तारपीठकम् ॥
भद्रपीठं दाक्षिणात्ये मध्यदेशस्य पार्वति ! ।
जालन्धरन्तु पाश्चात्ये पूर्णपीठन्तु पूर्वतः ॥
ऐशान्यां पूर्वभागे च कामरूपं च जानीहि ।
जालन्धरन्तु वायव्ये कोल्लापूरन्तु उत्तरे ॥
ईशाने चैव विहारं महेन्द्र उत्तरे कियत् ।
श्रीहट्टापि पूर्वे च उपपीठान्यथो शृणु ॥
नौकायानेन देवेशि ! अष्टषष्टिस्तु योजनैः ।
प्रस्तारे ओड्रपीठस्य आयामेऽति गुणं भवेत् ॥
शकटाकारकं पीठं चतुष्कोणं सपीठकम् ।
चतुर्द्वारसमायुक्तं वायुविम्बेन चिह्नितम् ॥
तीर्थकोटिद्वययुतं सिन्धुभद्रकपीठकम् ।
यत्र सोमेश्वरं लिङ्गमादिपीठं तथा परम् ॥
कामधेनुश्च यत्रैव यत्र चक्रेश्वरो हरः ।
क्षेत्रं विरजःसंज्ञञ्च एकाम्रं तदनन्तरम् ॥
भास्करस्य महाक्षेत्रं यत्र मातङ्गशङ्करः ।
कुशस्थली महापुण्या दन्तकस्य वनं तथा ॥
सुमन्तश्च तथारण्यं शिवयूपश्च पूर्वतः ।
पश्चिमे धेनुकारण्ये उत्तरे तु गयाशिरः ॥
दक्षिणे चन्द्रभागा च ओड्रपीठं वरानने ! ।
त्रिंशद्योजनविस्तीर्णमायामे शतयोजनम् ॥
यत्र कामेश्वरी देवी योनिमुद्रास्वरूपिणी ।
भूगोलपीठकं नाम यत्र वै गोलकेश्वरः ॥
धर्मपीठं महापीठं यत्र कामेश्वरो हरः ।

अविमुक्तं महाक्षेत्रं हंसप्रपतनं तथा ॥
ब्रह्मयूपस्तु तत्रैव यत्र श्वेतवटः स्थितः ।
कुरुक्षेत्रन्तु तत्रैव यत्र मायास्वना नदी ॥
अयोध्यारण्यकं पुण्यं धर्मारण्यं तथा परम् ।
कचात्मकं महारण्यं यत्र पातालशङ्करः ॥
गण्डकी च नदी पूर्वे विष्णुयूपश्च पश्चिमे ।
दक्षिणे वृषभं लिङ्गं उत्तरे कदलीवनम् ॥
एतन्मध्यतमं पीठं चापाकारं मनोरमे ! ।
आननाभं तथा पद्मं रक्तवर्णं विभावयेत् ॥
एकादशशतायामं योजनानां तथा नव ।
अशीत्यष्टौ च प्रस्तारे त्रिकोणं पीठमुत्तमम् ॥
प्रवरं पीठकं तत्र पीठं चाशोकमेव च ।
सीतायाश्च महाक्षेत्रं अगस्त्यस्याश्रमस्तथा ॥
हरस्य परमं क्षेत्रं क्षेत्रत्रयमिदं प्रिये ! ।
माधवारण्यकं क्षेत्रं हरस्यारण्यकं तथा ॥
अरण्यञ्चैव भर्गस्य एतदारण्यकं त्रयम् ।
उत्तरे ब्रह्मक्षेत्रञ्च दक्षिणे सागरावधि ॥
पूर्वे तूदयकूटञ्च पश्चिमे श्रीपर्वतं प्रिये ! ।
एतन्मध्यतमं पीठं पुण्याख्यं नाम नामतः ॥
पादात् पादान्तरं यावन्मध्यहस्तद्वयान्तरम् ।
शिवरात्रौ च गमनं सौरमासेन मासकम् ॥
कामरूपं विजानीयात् षट्कोणास्रगर्भकम् ।
तत् पुण्यं तत्समं वेत्थ नवव्यूहं त्रिमण्डलम् ॥
पर्वतैर्दशभिर्युक्तं वेदिमध्यं प्रकीर्त्तितम् ।
मध्यपीठं महापीठं यत्र कामेश्वरोऽभवत् ॥
तत्र पीठे हि देवेशि ! यत्र चम्पावती नदी ।

कन्याश्रमं महाक्षेत्रं यत्र रुद्रपदद्वयम् ॥
एकाम्रकं परं क्षेत्रं यत्र नागाङ्कशङ्करः ।
मानसं क्षेत्रकञ्चैव यत्र विश्वेश्वरो हरः ॥
नाटकारण्यकञ्चैव चम्पकारण्यकं तथा ।
पिच्छिला वा दक्षिणतो गौतमस्य महाबलम् ॥
पूर्वे स्वर्णनदीं यावत् करतोया च पश्चिमे ।
दक्षिणे मन्दशैलश्च उत्तरे विहगाचलः ॥
प्रस्तारे चैव मासार्द्धं योजनानाञ्च पञ्चकम् ।
ऋतुत्रयञ्च त्रिस्रोतः पञ्चोद्भवं तथा दश ॥
अष्टकोणञ्च सौपारं यत्र दिक्करवासिनी ।
तस्मिन् वसति सा देवी ज्ञानाद्ध्यानाद्भवोऽपि वा ॥
तेऽपि देव्याः प्रसादेन स्थितिं गच्छन्ति नान्यथा ।
अथाद्यं मानवं पीठं सौमाराख्यान्तु कथ्यते ॥
वसत्यजेयं प्रत्यक्षं यत्र दिक्करवासिनी ।
दिक्करस्य च वायव्ये नीलपीठं सुदुर्लभम् ॥
यत्र कामेश्वरी देवी योनिमुद्रास्वरूपिणी ।
पारिजातं महाक्षेत्रं यत्रादित्यस्तु शङ्करः ॥
कौषियस्य पुरं क्षेत्रं तथा चामरकण्टकम् ।
आरण्यमाश्विनञ्चैव गौतमारण्यकं शिवम् ॥
अरण्यं शिविनाथस्य शृणु पीठावधि प्रिये ! ।
पूर्वे सौरशिलारण्यं पश्चिमे स्वर्णदी शुभा ॥
दक्षिणे ब्रह्मयूपस्तु उत्तरे मानसं सरः ।
एतन्मध्यगतं पीठं भुक्तिमुक्तिप्रदायकम् ॥
सौमाराख्यं महापीठं षट्कोणन्तु त्रिमङ्गलम् ।
सहस्रयोजनव्यासं हयताम्रञ्च पञ्चमम् ॥
प्रस्तारे तु व्यासहीनं कोल्वपीठं प्रकीर्त्तितम् ।

सौमाराख्यं महापीठं शिवतल्पञ्च पीठकम् ॥
वक्रशैवेश्वरं लिङ्गं यत्र वै कमला शिला ।
केदारक्षेत्रं प्रथमं यत्र केदारशङ्करः ॥
यत्र पिण्डकरं क्षेत्रमरुणो यत्र तिष्ठति ।
दुर्गारण्यं सोमारण्यं भद्रारण्यं तथैव च ॥
अशीतियोजनं क्षेत्रं षट्त्रिंशद्योजनायुतम् ।
चौहाराख्यं महाक्षेत्रं यत्र गत्वा न शोचति ॥
ब्रह्मक्षेत्रं कलाक्षेत्रं रघुक्षेत्रं तथैव च ।
नन्दनं पारिजातञ्च शिवारण्यं तथा परम् ॥
देशारण्यं ततः प्रोक्तं सप्तपीठावधि प्रिये ! ।
पूर्वे तु हीरिका नाम नदी पुण्यतमा स्मृता ॥
पश्चिमे नाथकं लिङ्गमुत्तरे किलिपर्वतः ।
दक्षिणे नाथवृक्षस्तु पीठन्तु परिकीर्त्तितम् ॥
गोयानेन त्रिभिर्मासैस्तथा चैव दिनत्रयम् ।
मासहीनन्तु प्रस्तारे त्रिपीठं नाम नामतः ॥
वाराही प्रथमं पीठं द्वितीयं कोलपीठकम् ।
कुमारक्षेत्रं प्रथमं द्वितीयं नन्दनाह्वयम् ॥
तृतीयं शाश्वतीक्षेत्रं मातङ्गं प्रथमं वनम् ।
सिद्धारण्यं द्वितीयन्तु तृतीयं विपुलं वनम् ॥
कोटिकोटियुतं लिङ्गं कोटिकोटिगलैर्वृतम् ।
पञ्चतीर्थं भवेत् पूर्वे पश्चिमे धनदा नदी ॥
पत्राख्या दक्षिणे चैव उत्तरे कुरुवकावनम् ।
एतन्मध्यगतं देवि ! श्रीपीठं नाम नामतः ॥

इति योगिनीतन्त्रे सर्वतन्त्रोत्तमे द्वाविंशतिसाहस्रे कामरूप-पीठाधिकारे प्रथमतमे द्वितीयभागे प्रथमः पटलः ।

## अथ द्वितीयः पटलः।

श्रीभगवानुवाच।

नित्यं निर्वर्त्त्य स्वगृहे पितॄन् नान्दीमुखानपि।
अभ्यर्च्य विधिवद्भक्त्या पश्चाद् यात्रां समाचरेत्॥
उत्तरस्थगते शुक्रे सानुकूले शुभे ग्रहे।
गुरुपित्रोरनुज्ञाप्य ब्राह्मणानां विशेषतः॥
भोजयित्वा द्विजान् सप्त ततो यात्रां समाचरेत्।
सिंहे धनुषि मेषे च न गच्छेत् पूर्वपीठकम्॥
घटे च मन्मथे कुम्भे न गच्छेत् पश्चिमं बुधः।
वृषेऽङ्गनायां मकरे न गच्छेद्दक्षिणालयम्।
कर्कटे कीटमीने च न गच्छेदुत्तरं सुधीः॥
चापे गव्यङ्गनायाञ्च न गच्छेद्वह्निकोणकम्।
मकरे कर्कटे मीने नैरृत्यां परिवर्जयेत्॥
वायव्यां कुम्भमेषे च चापे चैव विवर्जयेद्।
सिंहे मीने कर्कटे च ऐशान्यां तु न चिन्तयेत्॥
एतत् स्थूलं विजानीयाद् योगिनीं शृणु शङ्करि!।
न गच्छेन्मन्दवारे च पूर्वदेशं मम प्रिये!॥
पश्चिमं सवितुर्वारे दक्षिणं बुधवासरे।
कुजवारे तथा नादयन्त्रे चापि दिशं भजेत्॥
जीववारे तु नैरृत्यां वायव्यां भृगुवासरे।
शनिवारे तथैशान्यां सोमे चैव विशेषतः॥
पूर्वदेशं महेशानि! प्रतिपन्नवमी तथा।
न गच्छेद्यात्रिको यात्रां योगिनी सम्मुखा यतः॥
चतुर्दशी तथा षष्ठी पश्चिमन्तु विवर्जयेत्।
त्रयोदशी पञ्चमी च न गच्छेद्दक्षिणां दिशम्॥

द्वितीया दशमी चैव वर्जयेद्राक्षसीं दिशम्।
पूर्णिमा सप्तमी चैव वायव्यां सर्वथा त्यजेत्॥
न गच्छेच्चैव ऐशान्याममावास्यां तथाष्टमीम्।
विष्कम्भः प्रीतिरायुष्मान् प्रतिपत्सु विवर्जयेत्॥
सौभाग्यं शोभनञ्चैव द्वितीयाञ्चातिगण्डके।
सुकर्मा च धृतिश्चैव तृतीयायां विजानीहि॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातश्च तथैव च।
चतुर्थ्यां वर्जयेद्देवि! पञ्चम्यां हर्षणं तथा॥
वज्रं सिद्धिव्यतीपातौ षष्ठ्यां जानीहि शङ्करि!।
वरीयान् परिघश्चैव सप्तम्यां परिवर्जयेत्॥
शिवः सिद्धिश्च साध्यश्च वर्जयेदष्टमीतिथौ।
नवम्यां शुभशुक्रञ्च दशम्यां ब्रह्म एव वा॥
एकादश्यां तथेन्द्रस्तु द्वादश्यां वैधृतिं त्यजेत्।
उत्तरात्रयं त्रयोदश्यां विशाखान्तु चतुर्दशीम्॥
मघार्द्रां भरणीञ्चैव पौर्णमास्यां विवर्जयेत्।
प्रतिपत्कृत्तिकायान्तु द्वितीयायान्तु ज्येष्ठके॥
न यात्रिके च नक्षत्रे प्रस्थाने न कदाचन।
यात्रायान्तु न दुष्टं स्यात् करणस्य विचिन्तनम्॥
जन्ममासे जन्मदिने जन्मनक्षत्रके तथा।
अष्टम्याञ्च नवम्याञ्च सदाकालेषु वर्जयेत्॥
आपत्काले च यात्रायामूषासम्यञ्च पश्चिमे।
गोधूलिसमये चैव पूर्वदेशे विजानीहि॥
मध्याह्ने दक्षिणे चैव अपराह्ने तथोत्तरे।
ऐशान्याञ्च तथा रात्रौ नैरृत्यां सन्ध्ययोर्द्वयोः॥
मध्यन्दिने तथाग्नेये वायव्यां प्रातरेव हि।
वारुणादिषु योगेषु यथाकाले समाचरेत्॥

विना जातं दिनं तत्र अष्टमी नवमीं विना ।
प्राचीदिशं समागच्छेद् यात्रां कुर्य्यादुदङ्मुखः ॥
उत्तरे दक्षिणामुखो यात्रां कुर्य्यात् सुसिद्धये ।
कुसुमं यावकः शङ्खो भेरी वाद्यञ्च भूमिपः ॥
गावः शतं रथं यानं दक्षिणे शुभगाः स्मृताः ।
सिद्धान्नं मांसपिण्डञ्च भक्तं भाजनजं गुरु ॥
मत्स्यपिण्डं परा हाराः सर्वाश्च दक्षिणे शुभाः ।
कन्याः वै मिथुनं वेश्या पूर्णकुम्भाः स्त्रियस्तथा ॥
चकोतः पशुखगाश्च वामतः शुभकारकाः ।
अग्रे दधि फलं यात्रा शुभदा परिकीर्त्तिता ॥
तथा क्रौञ्चमयूराश्च युग्मं गच्छन्ति गच्छतः ।
तदा सिद्धिं विजानीयादन्यथा विघ्नमादिशेत् ॥
गृध्राः श्येनाश्च चिल्लाश्च पार्श्वं गच्छन्ति वै यदा ।
न कुर्य्याद् यात्रिको यात्रां वायसे वनसंस्थिते ॥
च्यूतं निष्ठुरसम्भाषं गृहगोधारुतं तथा ।
क्रन्दनं कलहं श्रुत्वा न गच्छेत्तु कदाचन ।
गुर्वादित्ये गुरौ सिंहे शुक्रे चास्तमुपागते ॥
देवतादर्शनं यात्रां प्रतिष्ठां नैव कारयेत् ।
व्रतारम्भं तथोद्वाहं गृहं प्रासादिकं तथा ॥
वापीकूपतड़ागानि यन्त्रस्यारम्भकं तथा ।
भारोपयेद् यज्ञवृक्षमारामकरणं तथा ॥
देवव्रतं वृषोत्सर्गं यज्ञस्यारम्भकं तथा ।
कर्णवेधोपनयने स्त्रीणामानयनं त्यजेत् ॥
प्राग्दर्शनञ्च देवानां न कुर्वीत कदाचन ।
प्रागारम्भं व्रतानाञ्च यात्रां संवत्सरात् परम् ॥
तथा व्यालव्रतं यच्च तथा नित्यं वर्जेच्च वै ।

न कालनियमस्तत्र तथा च रोहिणीव्रते ॥
शिवरात्रिव्रते चैव प्रयागस्य च मुण्डने ।
देशदाहे ग्रहाणाञ्च विशुभं कर्म आरभेत् ॥
उज्जयिन्यामर्कशुद्धिर्मध्यदेशे विधोः शुभम् ।
कुजशुद्धिस्तु नेपालेऽवन्त्यां च बुधस्य हि ॥
गौड़े चान्ध्रे गुरोः शुद्धिः कामरूपे भृगोः स्मृता ।
मथुरायामर्कजस्य राहोरङ्गे च वङ्गके ॥
धनुर्बाणं तथा तद्वद् ओड्रपीठे व्यवस्थितम् ।
जालन्धरे चतुर्हस्तं ऊर्मिकं हस्तपूर्णके ॥
पंक्तिहस्तं कामरूपे शीमारे तारहस्तकम् ।
कोल्लपीठे तुर्य्यहस्तं चौहारे द्विगुणं भवेत् ॥
महेन्द्रे तु कलाहस्तं श्रीहट्टे वह्निहस्तकम् ।
उपपीठे च पाताले हस्तमेव विजानीहि ॥
रत्नपीठे तु षड्हस्तं लौहित्यां चैव उत्तरे ।
बलदेवाश्रमे चैव तथा कन्याश्रमेषु च ॥
न योगिनीमुखं गच्छेत् स्नानं ध्यानं विवर्जयेत् ।
यानेनार्द्धफलं विद्यात्तथा छत्रे च पादुके ॥
तीर्थयात्राफलं हन्ति सुरतैर्मांसभक्षणैः ।
तीर्थे प्राप्यानुषङ्गेन तीर्थस्य च फलं लभेत् ॥
ज्ञानेन तु तदाप्नोति ज्ञानहीने तु निष्फलम् ।
तीर्थे चाचमनं वर्जेत् पादप्रक्षालनं तथा ॥
शौचमाचमनञ्चैव अन्यतीर्थप्रशंसनम् ।
अन्यतीर्थरतिञ्चैव सदा तीर्थेषु दूषणम् ॥
न मलं निर्वपेत्तीर्थे न केशं निर्वपेत् क्वचित् ।
न तीर्थतीरे निवसेद् दक्षिणे तु विशेषतः ॥
दक्षिणे चैव तीर्थस्य न स्नायाद्धि कदाचन ।

तीर्थं तथोत्तरे भागे अष्टकोटिसहस्रशः ॥
वसन्ति तत्र तीर्थानि पुण्यान्यायतनानि च ।
दक्षिणे कुण्डतीर्थस्य सरितां वामतः प्रिये ! ॥
तीर्थेषु ब्राह्मणं नैव परीक्षेच्च कदाचन ।
यत्तीर्थं यस्य देवस्य तत्तीर्थस्थद्विजाः सदा ॥
वन्दितव्याश्च पूज्याश्च तेषां वाक्येन पूतता ।
न कालनियमः श्राद्धे पिण्डे तु वर्जयेन्मधु ॥
तीर्थं गत्वा न दूरात्तु वसेत्तीरे विचक्षणः ।
ग्रहणे चैव तीर्थे च तथा च पितृवासरे ॥
यज्ञारम्भे समाप्तौ च भूकम्पे तु विशेषतः ।
ब्राह्मणे दानयोग्यं न श्राद्धयोग्यं न तद्भवेत् ॥
न दीयते महादानं निष्फलं परिकीर्त्तितम् ।
नावाहनं च चार्घ्यञ्च न चाग्नौकरणं तथा ॥
पवित्रसेचनेनैव तथाक्षय्यावधारणम् ।
तीर्थश्राद्धे न कुर्वीत वासःसूत्रप्रदापनम् ॥
ततः सप्तदशान् पिण्डान् पिण्डकालेषु निर्वपेत् ।
श्राद्धं समाप्य तत् पिण्डं न दद्याच्च कदाचन ॥
मज्जनं प्रतिकुण्डे च प्रतितीर्थे च मज्जनम् ।
दिवसे दश चाष्टौ च पञ्च सप्तत्रयं तथा ॥
अतः कृत्वाभिषेकञ्च तीर्थे च प्रतिपूजयेत् ।
लौहित्ये चैव शोणे च गयायां विरजेषु च ॥
कन्याश्रमेष्वगस्त्ये च पारिपात्रे तथैव च ।
मुकुराङ्गे च एकाम्रे मण्डलञ्च विवर्जयेत् ॥
पापराशिस्तु केशाग्रे प्रपलाय्य प्रतिष्ठति ।
तस्मात् शिखां परित्यज्य कर्णमूले च स्थापयेत् ॥
घाटान्ते चैव मासान्ते षण्मासान्ते च वत्सरे ।

अष्टावष्टौ समान्ते वा मुण्डनञ्च पुनश्चरेत् ॥
ततः कुशमयं विप्रं कृत्वा तीर्थे निधाय च ।
उत्तराभिमुखो भूत्वा बान्धवान् स्नापयेद्बुधः ॥
कुशो निदिति मन्त्रेण त्रिवारं स्नापयेत् कुशैः ।
तत्तीर्थस्य तुरीयाङ्गं फलं प्राप्य न संशयः ॥
गृहीत्वा तु द्विजक्रोड़े नामोच्चारणमज्जनम् ।
कृत्वा तीर्थफलस्यार्द्धं ब्राह्मणस्य विधीयते ॥
वरं विक्रयणं मातुर्वरं विक्रयणं पितुः ।
न स्नापयेच्चासगोत्रं न तीर्थे तु प्रतिग्रहम् ॥
सिद्धक्षेत्रेषु तीर्थेषु नाशीः कुर्य्यात् परस्य च ।
न गृह्णीयादितोऽन्यत्र तिलं गाञ्च विशेषतः ॥
न गृह्णीयाच्च शूद्रस्य यज्ञे पात्री भवेत् क्वचित् ।
यस्य यज्ञस्य यत् पात्रं तस्य पापेन लिप्यति ॥
तस्मात् सर्वप्रयत्नेन परयज्ञं विवर्जयेत् ॥

इति योगिनीतन्त्रे द्वाविंशतिसाहस्रे कामरूपाधिकारे
द्वितीयभागे द्वितीयः पटलः ।

---

## अथ तृतीयः पटलः ।

श्रीभगवानुवाच । कामरूपं महापीठं गुह्याद्गुह्यतमं परम् ।
सदासौ संस्थितस्तत्र पार्वत्या सह शङ्करः ॥
नचिरात् पूजितो देवस्तस्मिन् पीठे प्रसीदति ।
तत्तु पीठं प्रवक्ष्यामि शृणु त्वं साम्प्रतं प्रिये ! ॥
नदीशतं यात्राकालं लिङ्गकोटिगणावृतम् ।
वायुकूटस्य चाग्नि धनुर्हस्तप्रमाणतः ॥

वायुरूपः स्थितश्चन्द्रस्तस्मान्निःसृत्य मारुतः ।
तन्तु वायुं समभ्यर्च्य वायुलोकमवाप्नुयात् ।
पूर्वं वायुगिरेः शैलश्चन्द्रकूट इति स्मृतः ॥
मध्यतश्चैव गोदन्त ऋष्यक्रान्तस्तु दक्षिणे ।
माधवश्चन्द्रकूटे तु गोदन्ते च जटाधरः ॥
षण्मुखश्च जयन्तश्च अश्वक्रान्ते जनार्दनः ।
तत्तद्बीजेन मन्त्रेण पूजयेन्मधुपायसैः ॥
यो वसेद्वायुकूटे तु धनानामधिपो भवेत् ।
चन्द्रशैले निवासस्तु क्षयी भवति नान्यथा ॥
पापी भवति गोदन्ते अश्वक्रान्ते तु मुक्तिदः ।
चन्द्रशैलस्य पूर्वं तु किञ्चिदाग्नेयगोचरे ॥
लौहित्यमध्ये देवेशि ! धनुस्त्रिंशत्प्रमाणतः ।
इन्द्रशैल इति ख्यातस्तत्र वासे महाफलम् ॥
इन्द्रचन्द्रस्य मध्ये तु किञ्चिद्दक्षिणगोचरे ।
उत्तरे चन्द्रशैलस्य त्यजेत् षोढ़ा धनुर्बुधः ॥
धनुस्त्रयञ्च प्रस्तारे धनुषः शतकं मतम् ।
पञ्चविंशतिदैर्घ्येण चन्द्रकुण्डाह्वयं सरः ॥
तत्र स्नात्वा च पीत्वा च नरः कैवल्यमश्नुते ।
चन्द्रतीर्थं महातीर्थं तीर्थं पिण्डारकं समम् ॥
स्नात्वा चानेन मन्त्रेण ब्रह्महत्यां व्यपोहति ।
सुधीशवंशसम्भूत ! माधवप्रीतिदायक ! ॥
सुधीश्रवणजाह्लाद ! पापं हर ! नमोऽस्तु ते ।
भृगुः प्रायः सर्गयुतं अ..दपंक्तिसमन्वितम् ॥
तदूर्द्धं च भृगुर्दण्डी जान्तं शक्तिसुरान्वितम् ।
नादविन्दुसमायुक्तं पुनर्जान्तं सुभाविकम् ॥
अष्टाक्षरञ्च कक्कोलमन्त्रेणार्घ्यं समापयेत् ।

मेषे मीने पौर्णमास्यां जपन् काममनुं निशि ॥
स्नात्वा ब्रह्मत्वमाप्नोति दुर्गतिञ्च न विन्दति ।
स्नानञ्च दिवसे कुर्य्यान्महापातकनाशनम् ॥
इत्यनेन तु मन्त्रेण यः स्नायाच्चन्द्रपाथसि ।
अवच्छिन्नामन्त्रभिस्तु यावत्तिष्ठति मेदिनी ॥
स एव चन्द्रभवनं भोरो ! याति परं पदम् ।
तस्य दक्षिणदिग्भागे चतुर्धनुःप्रमाणतः ॥
मानसं नाम तत्तीर्थं सर्वपापप्रणाशनम् ।
कार्त्तिके शुक्लपक्षे तु स्नानं तत्र समाचरेत् ॥
विष्णुलोकमवाप्नोति मन्त्रेण परमेश्वरि ! ।
तस्मान्न संशयस्तीर्थं विष्णुतुष्टिप्रदायकम् ॥
योगज्ञानाप्तये तुष्टिमर्घ्यं हर सरित्पते ! ।
तस्य दक्षिणदिग्भागे अष्टाविंशद्धनुर्मितम् ॥
अयुताख्यं सरस्तत्र स्नात्वायुतपदं व्रजेत् ।
वर्षासु चतुरो मासान् यस्तत्र स्नानमाचरेत् ॥
स याति ब्रह्मसदनं मध्याह्ने यदि शङ्करि ! ।
मन्त्रेण स्नानं कुर्य्यात्तु अर्घ्यभावेन साधकः ॥
अमृताख्यं महापिण्डं सिद्धं देवाभिवन्दितम् ।
अमृताधिवासं सर्वं प्राणिनां किल्विषात् परम् ।
तद्दक्षिणे दशधनुरृणमोचनकं सरः ॥
स्नाहादृणत्रयान्मुक्तोभवबन्धो न जायते ।
भाद्रे ललितसप्तम्यां तत्र स्नात्वा दिवं व्रजेत् ॥
माघे मासि चतुर्दश्यां स्नात्वा मुक्तिञ्च विन्दति ।
ऋणग्रस्तनराः सर्वे त्रिभिः कर्मादि बन्धनात् ॥
ऋणत्रयान्मोचयित्वान्ते ऋणमोचनकं सरः ।
दक्षिणे अश्वक्रान्तस्य किञ्चिदाग्नेयगोचरे ॥

धनुरर्कप्रमाणेन अश्वक्रान्ताह्वयं सरः ।
नागलोकादुत्थितश्च कल्किरूपी जनार्दनः ॥
स्नात्वा तत्रैव विरजे अश्वतीर्थं चकार ह ।
उत्तरे वापि मार्गस्य तत्र वासं समाचरेत् ॥
गन्धतोयेन चीरेण मन्त्रेणानेन यत्नतः ।
ब्राह्मणासेविते पुण्ये वाराणस्याः कलाधिके ।
गृहाणार्घ्यं सश्लोकश्च मुक्तिं तत्र ददाम्यहम् ॥
अश्वक्रमेण सम्भूतपापविच्युतिकारकः ।
अयुतैकनिदानोऽयमश्वक्रान्ताय ते नमः ॥
इत्यनेन तु मन्त्रेण स्नात्वा यज्ञफलं लभेत् ।
अश्वमेधाधिकं पुण्यं मौषलस्नानमात्रतः ॥
विधिश्च स्नानमात्रेण राजसूयफलं लभेत् ।
दानमक्षयतां याति पितॄणां तर्पणं तथा ॥
विशाखस्थो यदा भानुः कृत्तिकासु च पूर्णिमा ।
स योगः पद्मको नाम अश्वक्रान्ते सुदुर्लभः ॥
अन्तरीक्षाद्देवतीर्थे ततः पैतामहे शुभे ।
स्नानं येऽत्र करिष्यन्ति तेषां लोका महोदयाः ॥
न स्पृहा तेषु पुण्यस्य कृतस्यापत्कृतस्य च ।
करिष्यन्ति महेशानि ! सत्यमेतदुदाहृतम् ॥
तीर्थानां परमं तीर्थं लोकेऽस्मिन् त्रिषु विद्यते ।
कार्त्तिकी तु विशेषेण पुण्या पापहरा परा ॥
मन्त्रैर्दानैस्तपोभिश्च यत् कृत्यं जायते द्विजैः ।
यदा तु स्नानमात्रेण शुभैरपि सुभावितैः ॥
दर्शनात् सुविनिष्क्रान्ता महापातकिनः प्रिये ! ।
उपपातकसंसर्गाः स्वयं यान्ति सुमुक्षया ॥
तत्रोपवासी यज्ञस्य पुण्डरीकस्य यत् फलम् ।

तत् प्राप्नोति नरः क्षिप्रमल्पायासेन शङ्करि !।
माघे स्नात्वा तिलान् यस्तु प्रयच्छति च सद्द्विजे॥
यथाशक्त्या च भक्त्या च स विभुर्भुवने वसेत्।
तत्रोपवासं स्नानञ्च तद्दै गव्याशनं तथा॥
यः करोतिः नरः सोऽपि मृतः स्वर्गमवाप्नुयात्॥
वसन्ति तत्समीपस्था ये तत्राचरजातयः।
तेऽपि तस्यानुभावेन स्वर्गं यान्ति न संशयः॥
ये यच्छन्ति द्विजेऽप्यर्थं धार्मिके ब्रह्मशान्तितः।
ते मृताः स्वर्गमारूढाः पद्मासनचतुर्भुजाः॥
ब्रह्मणा सह सायुज्यं प्राप्नुवन्त्यपुनर्भवम्।
प्रायोपवेशं ये तत्र प्रकुर्वन्ति नरोत्तमाः॥
ते हंसयानेन नरा दिवं यान्त्यकुतोभयाः।
नृत्यन्ति पितरस्तेषां तुष्टाश्चैव पितामहाः॥
लभन्ते तर्पणात्तृप्तिं पितुर्दानात् त्रिपिष्टपम्।
स्पष्टन्तु पापिनस्तत्र मुच्यन्ते भवबन्धनात्॥
अवगाहणाद् ब्रह्मणः स भवत्यनुचरः सदा।
अश्वक्रान्तामनुप्राप्य न स्नानेन मनः क्वचित्॥
भक्तो वा यदि वाऽभक्तो दिवा वा यदि वा निशि।
तत्तीर्थं सर्वतीर्थानां सदनप्रवरं मतम्॥
पापघ्नं पुण्यजननं प्राणिनां परिकीर्त्तितम्।
ये पुनर्भावितात्मानस्तत्र स्नात्वा जनार्दनम्॥
पूजयन्ति यथाशक्त्या ते प्रयान्ति त्रिपिष्टपम्।
ब्रह्मा विष्णुस्तथा रुद्रो नित्यं सन्निहितास्त्रयः॥
अश्वतीर्थे महेशानि ! नान्यत् पुण्यतमं भुवि।
विरजामलतोयं तत् त्रिषु लोकेषु विश्रुतम्॥
ब्रह्मलोकस्य यत् स्थानं धन्याः पश्यन्ति तीर्थकम्।

ये तु वर्षशतं साग्रंत्र अग्निहोत्रमुपासते ॥
कार्त्तिके वामदेशैकतीर्थे ते मुक्तिभागिनः ।
सर्वयज्ञफलं तुल्यं सर्वतीर्थफलप्रदम् ॥
सर्वेषाञ्चैव वेदानां समाप्तिस्तैश्च वै कृता ।
येर्नत्वा ह्यश्वक्रान्ते च सन्ध्या च समुपासिता ॥
स्वपत्नीहस्तदण्डेन अश्वक्रान्तजनेन तु ।
भृङ्गारेण करङ्केण स्पर्शयेनापि शङ्करि ! ॥
आनीय तज्जलं पुण्यं सन्ध्योपान्ते विचक्षणः ।
समाधिना समाधेयात् सप्राणायामपूर्विकम् ॥
तस्यां कृतायां यत् पुण्यं तत् शृणुष्व वरानने ! ।
तेन द्वादशवर्षाणि भवेत् सन्ध्या सुवन्दिता ॥
अश्वमेधफलं स्नाने पाने दशगुणं तथा ।
उपवासेऽप्यनन्तञ्च प्राप्नोति सुमहत् फलम् ॥
तीर्थान्तरे गवां कोटिं विधिवद् यः प्रयच्छति ।
एकाहं यो वसेत्तीर्थे स तत् पुण्यफलं लभेत् ॥
अर्द्धपादप्रमाणेन यस्तु स्वर्णं प्रयच्छति ।
स्वर्णमानफलं तत्र तस्मै दद्यामतःपरम् ॥
चन्द्रशैलं स्पृशन् धारा जाह्नवी सा प्रकीर्त्तिता ।
अश्वतीर्थं स्पृशन् धारा मज्जनेष्वभिधीयते ॥
इन्द्रशैलं स्पृशन् धारा सा विज्ञेया सरस्वती ।
अश्वक्रान्ते सङ्गमस्तु वर्षासु च प्रदृश्यते ॥
प्रयागं तद्विजानीयात् कार्त्तिके च विशेषतः ।
यस्तत्र मुण्डनं कुर्य्यात् प्रयागे मुण्डनं फलम् ॥
अद्यापि दृश्यते देवि ! गयाकुण्डे द्विधारकम् ।
इह लोके दरिद्रो यो भ्रष्टराज्योऽथवा पुनः ॥
अश्वक्रान्ते जले गत्वा वैष्णवोमन्त्रहं जपेत् ।

कृत्वा पूजोपहारञ्च देवानां पितृतर्पणम् ॥
कृत्वा पिण्डप्रदानन्तु सोऽचिराज्जन्मवर्जितः ।
एकचक्रो भवेद्राजा सत्यमेतन्न संशयः ॥
इह जन्मनि सौभाग्यं धनं धानं वरस्त्रियः ।
भवन्ति विविधास्तस्य यैर्यात्रा कार्त्तिके कृता ॥
इदं यात्राविधानं यः कुरुते कारयेत् तथा ।
शृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते ॥
अगस्त्यागमनं येन कृतं जानन्ति मानवाः ।
अन्नक्रियोपलाभेन बहुवर्षशतेन च ॥
यात्रां चैत्रीं तथा कुर्य्याद्देवसंस्कारमाप्नुयात् ।
किमत्र बहुनोक्तेन न तदस्तीति भाविनि ! ॥
प्राप्यं संप्राप्यते तेन पापं वा यन्न पश्यति ।
सर्वयज्ञफलं तुल्यं सर्वतीर्थफलप्रदम् ॥
सर्वेषाञ्चैव देवानामुपास्तिस्तेन वै कृता ।
यैर्गत्वा अश्वतीर्थे तु स्नात्वा सकृद् यथाविधि ॥
पुत्रिण्या वै दुहिता वा वसुभिः सहिताः कुले ।
शिखरिणीञ्च प्रदातॄणां युवतीनां न संशयः ॥
मोदते तत् तस्य तु वै सर्वाङ्गं परिपूरितम् ।
काशीवासे युगान्यष्टौ दिनैकं पुरुषोत्तमे ॥
तदेव कोटिगुणितं विरजामुखदर्शने ।
तत्सदृशं गुणं विद्यादश्वतीर्थे क्षणे क्षणे ॥

तद्दर्शनेन हि विराजति राजसूयः
स्नानं जले दशगुणं किल वाजपेयात् ।
गण्डूषमात्रमपि चार्हति चाश्वमेधः
सर्वक्रतोरधिकमप्यधिकं भवाब्धः ॥

इति योगिनीयन्त्रे द्वितीयभागे तृतीयः पटलः ।

## अथ चतुर्थः पटलः।

देव्युवाच। यदि प्रसन्नो मे नाथ! तदेवं मे वद प्रभो!।
सुरेशानादिनाम्ना च कस्मिन् स्थाने भवान् स्थितः॥
केषु केषु च होमेषु त्वां पश्यन्ति सदा द्विजाः।
नाम्ना च कतमं स्थानं शोभते धरणीतले॥
भगवानुवाच। पुष्करेऽहं सुरेशानो गयायां वै सुशर्मदः।
कान्यकुब्जे वेदगर्भो भृगुकच्छे पितामहः॥
कौवेर्य्यां सृष्टिकर्त्ता च नन्दिपुर्य्यां बृहस्पतिः।
प्रभासे पद्मजन्मा च स्वर्गनद्यां सुरप्रियः॥
द्वारवत्यान्तु वाग्देवो नाटके नाटकेश्वरः।
नीलाचले च कामेशः पिङ्गलो हस्तिपर्वते॥
कुशावर्त्ते तु विजयो जयन्तः पुष्कराचले।
भस्माचले भयानन्दश्चन्द्रकूटे च माधवः॥
अन्तर्गृहे पद्महस्तो मङ्गलायाञ्च त्र्यम्बकः।
भद्रपीठे च दिव्येशो अश्वक्रान्ते जनार्दनः॥
अहिच्छत्रे तुल्यानन्दः श्रीशैले तु जगत्प्रियः।
पद्मपाणिः कुशहस्ते मानशैले मुनीश्वरः॥
श्रीकण्ठे श्रीनिवासश्च काम्पिल्ये सिद्धिदायकः।
कन्याश्रमे च रुद्रोऽहं मेनाके विश्वनादकः॥
एकाम्रे चैव नागेशो विरजायां महेश्वरः।
मूलिकाख्ये तथा विष्णुर्महेन्द्रे भार्गवस्तथा॥
कौशिक्यान्तु तथा बोधिरयोध्यायान्तु भार्गवः।
मणिकूटे हयग्रीवो वराहो विन्दुपर्वते॥
जटाधरस्तु गोदन्ते गोमन्ते जाङ्गलेश्वरः।
परमेष्ठी ब्रह्मपुत्रे विश्वशैले तु गह्वरः॥

चित्रशैले तु चित्रेशो देविकायां चतुर्भुजः ।
वृन्दावने पद्मपाणिः कुशहस्तस्तु नैमिषे ॥
मन्दरे च महाबोधिर्गोपीन्द्रो हनुपर्वते ।
भागीरथ्यां पद्मगर्भः काम्पिल्ले कनकाप्रियः ॥
करणे चैव कामीरः कापोते हव्यवाहनः ।
वशिष्ठश्चार्वुदे चैव श्वेतनद्यां मनोभवः ॥
धवलायां पिनाकी च पिच्छिलायां त्रिविक्रमः ।
यज्ञगर्भस्तु आगस्त्ये ऊर्वश्यां मधुसूदनः ॥
रुक्मिणीशे हरिश्चैव पैत्रिके तु रुचिस्तथा ।
वामनश्च गोमन्ते च काश्यां विश्वेश्वराह्वयः ॥
प्रजापतिः प्रयागे च विदर्भायां द्विजप्रियः ।
गङ्गाधरो भद्रपीठे मातङ्गे चैव त्र्यम्बकः ॥
त्रिपुरारिर्नन्दशैले पाण्डुशैले त्रिलोचनः ।
गङ्गाह्रदे त्रिलोकेशो भित्तिपूर्य्यां दिवाकरः ॥
वमटे मिञ्जिलानाथो दारुशृङ्गे कलानिधिः ।
दारुवने महालिङ्गः अशोके तु विनाशकः ॥
हरिसेनश्चुल्लुकायां पर्णाटे तु अनन्तकः ।
मार्कण्डेयो वटे चैव इन्दुद्वारे दिवाकरः ॥
गोकर्णे च विकर्णाख्यो मन्दारे मधुसूदनः ।
अष्टोत्तरशतं स्थानं मया ते परिकीर्त्तितम् ॥
यत्र वै मम सान्निध्यं नित्यन्तु तव सुव्रते ! ।
एतेषामपि यस्त्वेकं पश्येत् च भक्तिमान्नरः ॥
स्नानं विरजः संलब्ध्वा मोदते शाश्वतीः समाः ॥
मानसं वाचिकञ्चैव कायिकं यच्च दुष्कृतम् ।
तत् सर्वं वै शमं याति नात्र कार्य्या विचारणा ॥
यानि तानि च सर्वाणि गत्वा मां पश्यति नरः ।

भवते मोक्षमार्गी च यत्राहं तत्र संस्थितः ॥
पुष्पोपहारैर्धूपैश्च ब्राह्मणानाञ्च तर्पणैः ।
ध्यानेन च स्थिरेणाशु प्राप्स्यते परमेश्वरि ! ॥
अश्वक्रान्तस्योत्तरत ऋणमोचनपश्चिमे ।
द्वाविंशतिधनुर्मानं क्षेत्रं परमदुर्लभम् ॥
क्षेत्रं द्विपञ्चकं नाम सर्वदेवनमस्कृतम् ।
पूजयित्वा तत्र रुद्रं ज्योतिर्व्योमफलं लभेत् ॥
षाण्मास्यं नियताहारो ब्रह्मचर्यासमाहितः ।
उषित्वा तत्र देवेशि ! प्राप्स्यते परमं पदम् ॥
कृते युगे पुष्कराणि त्रेतायां नैमिषं मतम् ।
द्वापरे तु कुरुक्षेत्रं अश्वतीर्थं कलौ युगे ॥
तस्मात् तदुत्तरे तीरे साधयेन्मानसेप्सितम् ।
द्वापरे तु कुरुक्षेत्रं सर्वपुण्यफलप्रदम् ॥
दुष्करं पञ्चके दानं पञ्चके सर्वदुष्करम् ।
यदन्यत्र कृतं पापं तीर्थे याति च लाघवम् ॥
तत्तीर्थे कृतमन्यच्च क्वचित् पापं व्यपोहति ।
द्वादशाहं दशाहं वा मासार्द्धं दशमेव वा ॥
रुद्रस्यार्द्धासनगता मेरुपृष्ठे यशस्विनी ।
महादेवं ततो देवी प्रणता परिपृच्छति ॥

देव्युवाच । जन्मान्तरसहस्रेषु यत् पापं पूर्वसञ्चितम् ।
कथं तत् क्षयमाप्नोति तन्ममाचक्ष्व शङ्कर ! ॥

भगवानुवाच । शृणु देवि ! प्रवक्ष्यामि गुह्याद्गुह्यमनुत्तमम् ।
सर्वतीर्थेषु विख्यातमश्वक्रान्तमतःपरम् ॥
यस्योत्तरे तु यत् क्षेत्रं मयाप्युक्तं विमुक्तकम् ।
एतदेव परं ज्ञानमेतदेव परं तपः ॥
एतदेव परं ब्रह्म एतदेव परं पदम् ।

यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः ॥
यथेश्वराणां गिरिशः स्थानानामेतदुत्तमम् ।
दत्तं जप्तं हुतं श्रेष्ठं तपस्तप्तं कृतञ्च यत् ॥
ध्यानमध्ययनं ज्ञानं सर्वं भवति चाक्षयम् ।
अश्वक्रान्ते परो योगो अश्वक्रान्ते परा गतिः ॥
अश्वक्रान्ते परो मोक्षस्तीर्थं नैवास्ति तादृशम् ।
मेरुमन्दरतुल्योऽपि राशिः पापस्य सर्वशः ॥
अश्वक्रान्तं समासाद्य सर्वो व्रजति संक्षयम् ।
अश्वक्रान्तस्थितैः पुण्यैः पांशुभिर्वायुनेरितैः ॥
यदि दुष्कृतकर्माणो यास्यन्ति परमां गतिम् ।
न सा गतिः कुरुक्षेत्रे गयाद्वारे च पुष्करे ॥
या गति र्विहिता पुंसां अश्वक्रान्तनिवासिनाम्
न दानैर्न तपोभिर्न यज्ञै र्नापि च विद्यया ॥
प्राप्यते गतिरुत्कृष्टा अश्वतीर्थे स लभ्यते ।
संसर्गाच्च भवेन्मोक्ष इतरासत्परिग्रहात् ॥
आगस्त्यादपि चाग्न्यादि इदमेव महत्तरम् ।
ब्रह्महाप्यति यो गच्छेदश्वक्रान्तं कदाचन ॥
अश्वक्षेत्रस्य माहात्म्याद् ब्रह्महत्या निवर्त्तते ।
न तस्य पुनरावृत्तिः कदाचिदपि दृश्यते ॥
उत्तरं दक्षिणं वापि पुण्यद्वारं विचिन्तयेत् ।
सर्वोऽप्यस्य शुभः काल अश्वक्रान्ते वरानने !
महादानेन तल्लाभो यत्फलं लभते नरः ।
अश्वतीर्थे तु काकिन्यां दत्तायां लभतेऽक्षयम् ॥
एकाहमुपवासं यः करोतीह मम प्रिये ! ।
फलं वर्षसहस्रस्य लभते मत्परायणः ॥
तीर्थान्तरे गवां कोटिं विधिवद् यः प्रयच्छति ।

एकाहञ्च वसेच्चात्र तयोस्तुल्यं फलं लभेत् ॥
प्रयागे माघमासे तु सम्यक् स्नानेन यत् फलम् ।
तत्फलं कोटिगुणितं अश्वतीर्थे क्षणे क्षणे ॥
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।
सेवनाच्चैव मध्याह्ने अपराह्ने च शङ्करि ! ॥
मेरुमन्दरतुल्यो हि राशिः पापस्य सर्वशः ।
अश्वक्रान्तं समासाद्य सर्वो व्रजति संक्षयम् ॥
कीटाः पतङ्गा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः ।
मण्डूकमत्स्याः क्रमशोऽश्वतीर्थे त्यक्त्वा शरीरं शिवमाप्नुवन्ति ॥
यो वसेत् पञ्चके नित्यं स गच्छेत् परमां गतिम् ।
सर्वेषामेव लोकानां ब्रह्मलोकोपरिस्थितः ॥
यदीच्छेत् तत् पदं गन्तुं स वसेदत्र दुष्करम् ।
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ॥
तथैव सर्वक्षेत्राणामादिपञ्चकमुच्यते ।
अनुलोमविलोमाभ्यां तथा व्यस्तसमस्तयोः ॥
स्नातव्यं पञ्चकं यच्च अश्वतीर्थं वरानने ! ।
तथैवोत्तरमारण्यं तदेव फलमश्नुते ॥
विधिवद्गुह्यमानेषु सर्वतीर्थेषु यत् फलम् ।
पञ्चकालोकनादेव नरः प्राप्नोति तत् फलम् ॥
दशकोटिसहस्राणि तीर्थानां वै महीतले ।
सान्निध्यमश्वतीर्थे च मुक्तिद्वारसमीपतः ॥
यावत्तिष्ठन्ति गिरयो यावत्तिष्ठन्ति सागराः ।
तावत् पञ्चकस्नातूनां ब्रह्मलोके महीयते ॥
जन्मान्तरसहस्रैश्च अर्जितमरणान्तिकम् ।
निर्दहेत् पातकं सर्वं सकृत् स्नात्वा तु शङ्करि ! ॥
योगाभ्यासेन यस्तिष्ठेत् सम्यग् वर्षत्रयं नरः ।

एकेन जन्मना मुक्तिं योगान्मोक्षञ्च विन्दति ॥
ऋणमोचनान्ते देवेशि! समन्तात् पञ्चकं स्मृतम्।
ब्रह्मणः सदनं भद्रे! प्रशस्तमपि सर्वतः ॥
यत्र स्नानं जपो होमः श्राद्धं दानादिकं स्मृतम्।
एकैकशो महेशानि! पुनाति सप्तमं कुलम् ॥
अश्वतीर्थसमक्षे तत् किञ्चित्पश्चिमगोचरे।
धनुरष्टप्रमाणेन सिद्धकुण्डमिहोच्यते ॥
अत्र स्नात्वोदकं पीत्वा मुच्यते सर्वपातकैः।
त्रिरात्रोपोषितेनात्र एकरात्रोषितेन वा।
द्विजातीनान्तु कथितं तीर्थानामिह सेवनम् ॥
यस्य वायुं शशी युङ्क्ते हस्तपादौ च संयतौ।
एनोलोपी ब्रह्मचारी तीर्थानां फलमाप्नुयात् ॥
सिद्धकुण्डं महाभोगं देवताभिः सुसंस्कृतम्।
पुनीहि सर्वपापेभ्यस्तीर्थवर्य्य! नमोऽस्तु ते ॥
इत्यनेन तु मन्त्रेण वैशाखे कृष्णपक्षके।
त्रयोदश्यां स्नानमात्रे पुनात्युभयतः कुलम् ॥
पश्चिमे तस्य तीर्थस्य किञ्चित्तु मरुगोचरे।
चतुःषष्टिधनुर्मानं तीर्थं ब्रह्मसरः स्मृतम् ॥
तत्र स्नात्वा पितॄन् भक्त्या तर्पयित्वा यथाविधि।
पापकर्त्तॄनपि पितॄन् तारयेन्नात्र संशयः ॥
स्नात्वा याति द्विजः सम्यक् ततः संस्कारतां व्रजेत्।
स्वयन्तु ब्रह्मणा सृष्टं ईश्वरप्रियकाम्यया ॥
स्वयन्तु ब्रह्मणा स्नातं तस्मात् नाशय पातकम्।
इत्यनेन तु मन्त्रेण स्नानं कृत्वा यथाविधि ॥
माघे मासि चतुर्दश्यां शुक्लपक्षे विशेषतः।
दत्त्वा दानञ्च विधिवद् ब्रह्मलोके महीयते

इन्द्रकूटस्य कौवेरे धनुरशीतिप्रमाणतः ।
रामचेत्रं विजानीयात् तस्य कुण्डं कुले प्रिये ! ॥
विन्दुकुन्दप्रमाणन्तु स्नात्वाभ्यर्च्य पितृनपि ।
तीर्थेभ्यः परमं तीर्थं रामतीर्थं वरानने ! ॥
ब्राह्मणानर्चयित्वा तु ब्रह्मलोके महीयते ।
तव तीरे महाभागे ! श्रीरामेण महात्मना ॥
पितरस्तर्पिताः सर्वे तीर्थवर्य्ये ! नमोऽस्तु ते ।
इत्यनेन तु मन्त्रेण वैशाखे कृष्णपक्षके ।
तत्राभ्यर्च्य महादेवं गोसहस्रफलं लभेत् ॥
तस्य पूर्वे नवधनुः सीतातीर्थं वरानने ! ।
तत्र स्नात्वा दिवं यान्ति सशरीरा द्विजातयः ॥
क्रौञ्चञ्चापि महाश्राद्धे अक्षयं समुदाहृतम् ।
सीतया रामभद्रेण निर्मितं तीर्थमुत्तमम् ॥
तस्मात् पुनीहि मां पापैर्मोक्षं कुरु सुरार्चिते ! ।
मौनी भूत्वा त्रयोदश्यां तत्र स्नात्वा महाफलम् ॥
मन्त्रेणानेन स्नात्वा तु रत्नेनार्घ्यं प्रदापयेत् ।
मुच्यते सर्वपापेभ्यो ब्रह्मलोके वसेन्मृतः ॥
दक्षिणे चैव सीताया धनुर्दशप्रमाणतः ।
तत्राभिषेकमात्रञ्च विजयी सर्वदा भवेत् ॥
तीर्थानां परमं तीर्थं विजयं नाम शोभितम् ।
तत्र लिङ्गं महेशस्य विजयं नाम विश्रुतम् ॥
षण्मासान्नियताहारो ब्रह्मचारी समाहितः ।
उषित्वा तत्र देवेशि ! मुच्यते सर्वपातकैः ॥
तीर्थानां परमं तीर्थं योगितीर्थेति विश्रुतम् ।
सर्वपापहरं शम्भोर्निवासं परमेष्ठिनः ॥
दृष्ट्वा लिङ्गन्तु देवस्य योगीशं नाम विश्रुतम् ।

ईप्सितान् लभते कामान् रुद्रस्य दयितो भवेत् ॥
द्वाविंशत्तु धनुर्मानं मुक्तितीर्थं विजानीहि।
वक्ष्यमाणेन मन्त्रेण स्नात्वार्घ्यं विनिवेदयेत् ॥
मोक्षाभिकाङ्क्षिभिर्युक्तैर्वन्द्यते पूज्यतेऽनिशम्।
योगकुण्ड महाभागे ! मां पुनात्यमरार्चिते ! ॥
तस्मातिदूरे लोकस्य वृत्तं कुण्डमनुत्तमम्।
तत्रापि स्नात्वा विधिवत् सन्तर्प्य पितृदेवताः ॥
ब्राह्मणेभ्यः प्रदायाथ दानानि विविधानि च।
स्नात्वा कौलेन बीजेन तत्त्वेनार्घ्यं निवेदयेत् ॥
पश्चात् कौलेश्वरं दृष्ट्वा मुच्यते भवबन्धनात्।
तिथिहस्तमितं कुण्डं देवगन्धर्वसेवितम् ॥
कुण्डे सितवृतीयायां ग्रामं धान्यं धनं लभेत्।
इन्द्रशैलस्य याम्ये तु धनुर्द्वादशमानतः ॥
सूर्य्यतीर्थमिति ख्यातं तीर्थानां तीर्थमुत्तमम्।
अदृश्यमूर्त्तिं भगवान् तत्र सप्तरथेरितः ॥
आस्ते लोकहितार्थाय व्यापी योगतनुः स्वयम्।
यदा हरश्च निरयनिवासं कृत्तवानिह ॥
तत्रैव देवताः सर्वास्तस्यां सेव्याः समागताः।
भानुबीजेन स्नात्वा तु अर्घ्यं तारेण दापयेत् ॥
रामक्षेत्रं ततो गच्छेत् साधकः सिद्धिमानसः।
दुर्गकूपद्वयं तत्र ब्रह्मयूपश्च तिष्ठति ॥
दुर्गकूपोदकं पीत्वा माघे मासि चतुर्दशी।
भवेद्भक्त्या गर्भधरामन्त्राणामयुतं जपन् ॥
यूपं प्रदक्षिणीकृत्य यस्तु श्राद्धं प्रकल्पयेत्।
पितृंश्च तारयेत्तेन ब्रह्मलोके महीयते ॥
काकिनीश्च न्यसेत् कूपे सुवर्णं रजतं तथा।

यस्य मित्रस्य यद्वित्तं शोधयेत् पूर्वजन्मनि ॥
ततो गच्छेदिन्द्रशैलं दक्षिणाभिमुखेन तु ।
मणीश्वरं ततः पश्येन्निरयाच्च प्रमुच्यते ॥
वधबन्धनयुक्तोऽपि युक्तो वाप्युपपातकैः ।
इन्द्रकूटस्थितं दृष्ट्वा मणिनाथं स वायुना ॥
क्षणेन मुच्यते देवि ! नात्र कार्या विचारणा ।
चरमे लोमतीर्थस्य धनुःपञ्चप्रमाणतः ॥
नागतीर्थं ततो जातं पृथिव्यां ख्यातिमागतम् ।
नागकुण्डेति वैकुण्ठः स्नात्वा नागान् समर्चयेत् ॥
पुण्यं तत् सर्वतीर्थेषु सर्पाणां विषनाशनम् ।
स्नानं कुर्वन्ति ये मर्त्त्या भक्त्या श्रावणपञ्चमीम् ॥
न तेषां तत्कूले सर्पाः पीड़ां कुर्वन्ति कर्हिचित् ।
श्राद्धं पितॄणां ये तत्र करिष्यन्ति नरा भुवि ॥
ब्रह्मा तुष्टः परं स्थानं दास्यते नात्र संशयः ।
चन्द्रादुत्तरतः शैलश्चतुःषष्टिप्रमाणतः ॥
तत्र जले गयाकुण्डं चैव तीरे तदुच्यते ।
गयाशीर्षं पूर्वभागे धनुर्द्वाविंशमानतः ॥
यावल्लौहित्यपर्य्यन्तमुत्तरे ब्रह्मयोनिकम् ॥
गयातीर्थं परं गुह्यं पितॄणाञ्चातिवल्लभम् ।
कृत्वा पिण्डप्रदानन्तु न भूयो जायते नरः ॥
आगस्त्येऽस्मिन् गयायाञ्च तथा नीलाचले शुभे ।
यात्राभेदे ददेत् पिण्डं गयायाञ्च सकृत् प्रिये ! ॥
शोचन्ति पितरस्तस्य वृत्तोऽन्न शापविभ्रमः ।
गायन्ति पितरो गीतं कीर्त्तयन्ति महर्षयः ॥
गयां यास्यति यः कश्चित् सोऽस्माकं तारयिष्यति ।
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ॥

तेषां तत्समवेतानां यद्येकोऽपि गयां व्रजेत् ।
तस्मात् सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ॥
यो दद्याद्विधिवत् पिण्डान् गयां गत्वा समाहितः ।
धन्यास्तु खलु ते मर्त्त्या गयायां पिण्डदायिनः ॥
कुलान्युभयतः सप्त समुद्धृत्य स चाप्नुयात् ।
परं पिण्डप्रदानं स दद्याद्वै पायसेन च ॥
कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गृहे न तु ।
तिलपिण्याककै र्देयं भक्तिमद्भिर्नरैः सदा ॥
श्राद्धन्तु तत्र कर्त्तव्यमर्घ्यावाहनवर्जितम् ।
मूषिकगृध्रकाकाश्च नानुद्दिश्य चरन्ति ते ॥
श्राद्धं तत्तीर्थकं प्रोक्तं पितॄणां तुष्टिदं परम् ।
कर्त्तुं तत्र प्रयत्नेन भुक्तिरेवात्र कारणम् ॥
भुक्त्या तुष्यन्ति पितरस्तुष्टाः कामान् ददन्ति च ।
आयुः पुत्त्रान् धनं धान्यं कामानन्यान् प्रयच्छति ॥
भक्त्या चाराधितं रुद्रं नृणां प्रीताः पितामहाः ।
अकालेऽप्यथवा काले गयाश्राद्धं सदा नरैः ॥
प्राप्य चैव सदा स्नानं कर्त्तव्यं पितृतर्पणम् ।
पिण्डदानञ्च तेनाप्तं पितॄणाञ्चातिवल्लभम् ॥
पितरो हि निरीक्षन्तो गगनं समुपागताः ।
आशया परया भक्त्या आशामेषां प्रपूरयेत् ॥
विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् ।
अच्छिन्ना सन्ततिस्तेषां सदाकालं भविष्यति ॥
पितरः पुत्त्रदातारो वृद्धिश्राद्धाभिकाङ्क्षिणः ।
तेन ते सकलास्तुष्टाः पितरश्चैव कर्हिचित् ॥
अतः श्राद्धं पुरा प्रोक्तं स्वयमेव स्वयम्भुवा ।
ते सत्वरं तत्तत् कार्य्यं द्विजैः पितृपरायणैः ॥

तीर्थेऽच्युते गृहे वापि सङ्क्रान्तेऽपि ग्रहेऽपि वा ।
विषुवे तु तथा वापि जन्मनक्षत्रपीड़ने ॥
एते वै श्राद्धकालाः स्युः पुरा स्वायम्भुवोऽब्रवीत् ।
कृते श्राद्धे नवे पुंसां पीड़ा भवति देहजा ॥
इहामुत्र कृतं वापि सर्वं त्यजति दुष्कृतम् ।
यास्या न भवती पीड़ा ग्रहचौरनृपादिका ॥
दुष्कृतं नश्यती सर्वं परत्र च गतिं शुभाम् ।
लभते नात्र सन्देहः प्रजापतिवरो यथा ॥
कामेश्वरः सर्ववेदी अश्वक्रान्तस्तु कार्त्तिके ।
मातृमुख्यं गयाश्राद्धं पितृमुख्यन्तु अन्यतः ॥
पिण्डञ्च षोड़शं दद्याद् बहुलं कारयेत् सुधीः ।
पातयेत् क्षीरधाराश्च आरोहेत् सोमपर्वतम् ॥
साक्षिणः सन्तु मे देवा ब्रह्मविष्णुमहेश्वराः ।
महागयां समासाद्य श्राद्धं कुर्य्याद्विचक्षणः ॥
ततो भेर्य्यादिशब्देन आरोहेत् शिविकां नरः ।
गृहं गत्वा समभ्यर्च्य गृहदेवीं यथाविधि ॥
ब्राह्मणान् भोजयेत् पश्चात् अक्षय्यमुपधारयेत् ।
भुञ्जीत ब्राह्मणैः सार्द्धं दक्षिणामुपपातयेत् ॥
अस्मिन् पिण्डप्रदानेन आगस्त्ये विरजेषु च ।
दशाश्वमेधिकश्चैव तथा विष्णुपदेषु च ॥
एकत्र पिण्डदः कश्चित् पुनः श्राद्धं विवर्जयेत् ।
पुनराकर्षणं कृत्वा शापः पतति मूर्द्धनि ॥
त्रिदिनं पातयेत् पिण्डं गयायाञ्च विशेषतः ।
ततो मातृगयायाञ्च एकाहमपि पातयेत् ॥
आगस्त्ये विरजे चैव पातयेच्च दिनत्रयम् ॥

इति श्रीयोगिनीतन्त्रे द्वितीयभागे चतुर्थः पटलः ।

# अथ पञ्चमः पटलः ।

श्रीभगवानुवाच । ततः प्रभाते विमले साधकः सिद्धिमानसः ।
सोमशैलस्य ऐशान्यां दृष्टिमात्रान्तरे प्रिये ! ॥
मानशैलं ततो गत्वा गच्छेद्वाराणसीसरः ।
मणीश्वरस्य ऐशान्ये किञ्चित् पूर्वादिगोचरे ॥
धनुःसप्तान्तरे चैव कुण्डं वाराणसीयकम् ।
द्वाविंशद्धनुरायामं सर्वदेवैश्च संयुतम् ॥
देवी त्रिपथगा तत्र गोमती च सरस्वती ।
करतोया दिव्यनदी लौहित्यो घर्घरस्ततः ॥
सरयू धूर्तपापा च नर्मदा च महानदी ।
दृशद्वती देविका च तथा चर्मण्वती नदी ॥
कृष्णवेणी तथा पुण्या शोणः श्येनो महानदः ।
कावेरी यमुना चैव ये चान्ये नानुकीर्त्तिताः ॥
मम प्रीत्यर्थमायान्ति कुण्डं वाराणसीयकम् ।
उदधिं गङ्गरश्चैव क्षीरोदश्च तथा पयः ॥
घृतोदश्चैव मद्योदो दध्युदश्चैव सागरः ।
ह्रदाश्च सरितश्चैव तीर्थानि विविधानि च ॥
मधुमासे चतुर्दश्यां समायान्ति न संशयः ।
वैशाखस्य तृतीयायां समायान्ति सुमध्यमे ! ॥
स्नात्वा तत्र दिवं यान्ति यावदाभूतसंप्लवम् ।
जगन्माये ! जगद्बीजे ! जगत्पापप्रणाशिनि ! ॥
अमृतं देहि मे कुण्डे वाराणसि ! नमोऽस्तु ते ।
इत्यनेन तु मन्त्रेण अन्येनार्घ्यं निवेदयेत् ॥
तस्य दक्षिणदिग्भागे धनुःपञ्चप्रमाणतः ।
द्वाविंशतिधनुर्मानं कुण्डं मणिकर्णिकाह्वयम् ॥

मणिकर्णसमं तीर्थं न भूतं न भविष्यति।
सत्यं सत्यं पुनः सत्यं सत्यमेव सुनिश्चितम् ॥
मणिकर्णसमं तीर्थं नास्ति ब्रह्माण्डगोलके।
युगादिषु च सङ्क्रान्तौ उपरागे महेश्वरि ! ॥
स्नानं मध्यन्दिने कुर्य्यान्महापातकनाशनम्।
मणिकर्णे ! सुरश्रेष्ठे ! मणीश्वरि ! मणिप्रिये ! ॥
अयं हरकृतावासो मणिकर्ण ! नमोऽस्तु ते।
मन्त्रेणानेन स्नात्वा तु प्रणिपत्य विसर्जयेत् ॥
ऐशान्यां मणिशैलस्य मङ्गला नाम वै नदी।
नीर नीर वहन्तीव पापौघानि पुनीहि तौ ॥
मन्त्रेण स्नात्वा देवेशि ! प्रणिपत्य प्रसादयेत्।
मणीश्वरं ततो गत्वा स्नालयेत् काममुच्चरन् ॥
द्वितीयकेन स्पृष्ट्वा तु तृतीयेनाभिपूजयेत्।
कलाहस्तद्वयांशेन सिद्धत्वमिहोच्यते ॥
हंसोऽर्घ्यासनमारूढो रश्मिविन्दुसमासितः।
मन्त्रोऽयं देवदेवस्य ऋषिर्गर्ग उदाहृतः ॥
छन्दोऽनुष्टुप् भवो देव इष्टार्थे विनियोजयेत् ॥
उद्यत्किरीटशकलं विमलं स देवो विभर्त्ति वैयाघ्रतनुश्चतुर्भिः।
शूलञ्च यो वै स वरञ्च वज्रं रत्नं त्रिनेत्रं परमं मृगस्थम् ॥
मध्ये देवं पूजयेत् कृत्तिवासं भीमं देवं तत्पुरस्तात् हरञ्च।
भवं देवं शक्रमाद्यं विसंज्ञं पश्चाद्देवं वामनं कालसंज्ञम् ॥
यजेच्छ्रुतौः पद्मपत्रेषु देवो वाराणसी कीर्त्तिस्तयोः पुरस्तात्।
श्रीकण्ठाद्यस्तद्वहिः संयजेद्वै ग्रहान् पश्चात् तत्पुरस्ताद्दिगीशान् ॥
वामेऽनन्तः पूजितः स्यात् पिनाकी दक्षिणे भागे कमला सर्वतश्च।
सिद्धेशाख्यादग्रतश्च प्रपूज्याः स्वैः स्वैर्मन्त्रैः स्वीयकल्पोदितैश्च ॥

मणिनाथञ्चादिलिङ्गं ब्रह्मपाषाणमव्ययम्।
ऐशान्यां मङ्गला देवि! एतन्मध्यतमं प्रिये!॥
क्रोशत्रयमिदं चेत्रं मणिपीठं सुरार्चिते!।
दक्षवक्त्रा च कामेशी हयग्रीवन्तु पश्चिमे॥
उत्तरे कमलं लिङ्गं उत्तरायाः समुद्भवः।
पूर्ववक्त्रा च विरजा उत्तरे कौलकोद्भवम्॥
अन्यत्र वै कोटिद्वयं सर्वं वामोद्भवं भवेत्।
रमणायाः समुद्भूतं कुण्डं पञ्चशतं शतम्॥
सार्द्धकोटिस्तथा लिङ्गं त्रिशतञ्च कलौ युगे।
भूम्यन्तरस्थं लक्षञ्च सार्द्धलक्षं जले प्रिये!॥
द्विलक्षं पर्वते चैव पञ्चलक्षं गुहासु च।
भूमिपीठे सप्तलक्षं वृक्षमूले तु लक्षकम्॥
कुण्डमध्यगतं लिङ्गं अर्द्धलक्षं विजानीहि।
सन्ध्या सन्ध्यांशके चैव कुण्डं लौहित्यपावनम्॥
नवेन्दुशाके देवेशि! विदितं सर्वमेव तु।
वंशे सन्ध्यांशके चैव यदा शूद्रो भवेन्नृपः॥
तदा कामेश्वरी देवी स्फुटिता मध्यमांशके।
अन्ते नैव शाकेश्वरी स्फुटिता मध्यमेऽशके॥
अन्त्यांशे च शाके च देवी अव्यक्ता उर्वशी तदा।
भूशाके माधवे व्यक्ते सुधांशे विरजा प्रिये!॥
यत्फलं राजसूयेन पूजनाद्वन्दनात् प्रिये!।
वायव्ये मानशैलस्य वराहो नाम पर्वतः॥
तस्य पूर्वदक्षिणे च नरनारायणं सरः॥
तत्र पीत्वा च स्नात्वा च विष्णुलोके महीयते।
तस्य पश्चिमतीरे च लिङ्गं सोमेश्वरं परम्॥
तीर्थं प्रभासनामानं कृतानां मुक्तिदं फलम्।

सेवनात् क्षतपिण्डानां पापजित् कामदं नृणाम् ॥
तत्र वैनायकं तीर्थं वायव्ये धनुरष्टकम् ।
सप्तशतधनुरायामं प्रभासं तीर्थमुत्तमम् ॥
वायव्ये तस्य देवेशि ! धनुरर्कप्रमाणतः ।
तीर्थं विन्दुसरः पुण्यं स्नानात् पातकनाशनम् ॥
मणिसोमाचलान्तेन सहस्रपञ्चकं धनुः ।
भूलिङ्गं च भवेत् कोटीज्यामुत्र च सरस्वती ॥
धनुष्कोकिलकः शम्भु र्लच्चकालिरुदाहृता ।
नाटकाचलपूर्वे तु मतङ्गो नाम पर्वतः ॥
अग्नौ हयाचलं यावत् शिवस्यान्तर्गृहं स्मृतम् ।
अन्तर्गृहमृता ये च यान्ति ब्रह्म सनातनम् ॥
अक्षयं सत्कृतं तत्र यत्कृतञ्च तदक्षयम् ।
मणिशैले स्थिता ये च ये मृतास्तेऽपुनर्भवाः ॥
तत्र दानं कुरुक्षेत्रसमं भवति नान्यथा ।
अश्वतीर्थेन्द्रमध्ये तु ब्रह्मावधिरुदाहृतः ॥
वराहस्य मुखे तोयं दृष्ट्वा मत्स्योदरी तदा ।
आषाढ़े वर्षणे विष्णो र्यदा मत्स्योदरं भवेत् ॥
तदा सर्वप्रयत्नेन स्नानं कुर्य्यान्मम प्रिये ! ।
शतजन्मकृतं पापं स्नानान्नश्यति निश्चितम् ॥
भाद्रे वा श्रावणे वापि तदार्द्धार्द्धं लभेत् फलम् ।
कार्त्तिके दृश्यते किञ्चित् फलं दशगुणोत्तरम् ॥
हस्ताचलस्य पूर्वे तु किञ्चिद्देशाग्न्यगोचरे ।
भस्माचलं स्थिरं ज्ञात्वा समीचेत् काममुच्चरन् ॥
कीलकाचरमे भागे नाक्रान्तं तत्र पातयेत् ।
तत्क्षेत्रस्योत्तरे भागे धनुरर्कप्रमाणतः ॥
उर्वशी सा समाख्याता सर्वकिल्बिषनाशिनी ।

माघे मासि सिते पक्षे द्वादश्याञ्च समाहितः ॥
स्नात्वाश्वमेधजं पुण्यं लभते सङ्क्रमेषु च।
दिनक्षये च ग्रहणेन न स्नायाद्धि कदाचन ॥
नाशोऽपि ज्येष्ठपुत्रस्य धनस्य परमेश्वरि!।
तारं श्रवणशून्यञ्च वाराहं स शिखी स्थितः ॥
समार्णको वह्निजायाऽनन्तोऽयं परिकीर्त्तितः।
पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च ॥
उर्वश्यत्तानि सर्वाणि पापं हर नमोऽस्तु ते।
मन्त्रेण विधिवत् स्नात्वा उत्तराशामुखेन तु ॥
वारुणेन च मन्त्रेण दद्यादर्घ्यं विभूतये।
पूर्वाशामज्जनं कृत्वा महालक्ष्मीर्विमुच्यते ॥
धनं धान्यं प्रज्ञावृद्धिः कुवेराशाभिमज्जनात्।
तस्याः पूर्वे चार्कधनुरायतांशं तथा परम् ॥
सूर्य्यतीर्थमिति ख्यातं देवानामपि दुर्लभम्।
ऋषयः सिद्धगन्धर्वास्तीर्थानि च सरांसि च ॥
माहात्म्यमखण्डलं तस्य सूर्य्यकुण्डस्य शङ्करि!।
भगवन्तं गगनं देवि! भृगुः स्वर्गान्तिको मनुः ॥
स्नाने च पूजने चार्घ्यं स्तुतौ च विनियोजयेत्।
चैत्रे माघे च मासि च सप्तम्यां रविवासरे ॥
स्नात्वा स्वर्गमवाप्नोति सूर्य्यलोकञ्च विन्दति।
रक्तांशो! विश्वसम्भूत! महापातकनाशन!॥
महाभाग! हर्य्यात्मक! पापं हर नमोऽस्तु ते।
तत्पूर्वे तु पञ्चधनुः कामाख्यं नाम वै सरः ॥
तत्र स्नात्वा त्रयोदश्यां सर्वान् कामानवाप्नुयात्।
धात्रीफलं मुखे कृत्वा यस्तु स्नानं समाचरेत् ॥
अपुत्रो लभते पुत्रं राजानं पृथिवीपतिम्।

चैत्रे सितत्रयोदश्यां स्नात्वा राज्यञ्च विन्दति ॥
वक्ष्यमाणेन मन्त्रेण कामिनार्घ्यं निवेदयेत् ।
कामकुण्ड ! महाभाग ! त्वयं देवीभिः संस्तुतः ॥
प्रयच्छ कामान् सकलान् पापाच्च त्राहि सर्वतः ।
सूर्य्यतीर्थे चार्घ्यदानं यः करोति वराङ्गने ! ॥
शतमष्टोत्तरञ्चापि सहस्रमयुतं तथा ।
द्वादशक्षत्तथाष्टौ वा अश्वमेधफलं लभेत् ॥
माघे वा फाल्गुने वापि स्वाहार्घ्यं सप्तमीदिने ।
स्नात्वा रव्युदये काले कुष्ठी पापाद्विमुच्यते ॥
अपुष्पिता च विंशाद्दात् या नारी परमेश्वरि ! ।
तत्राभ्यर्च्यार्घ्यदानेन सा नारी पुष्पिता भवेत् ॥
योऽर्घ्यन्तु मार्त्तपात्रेण आदित्यस्य च शङ्करि ! ।
सप्त जन्मनि दारिद्र्यं मृते सा चाभिजायते ॥
मृतापत्या च या नारी अह्नि संपूज्य भास्करम् ।
करवीरेण वार्केण तथा धात्रीफलेन च ॥
करवीरशतं दत्त्वा नापुत्रो जायते क्वचित् ।
अभावे करवीरस्य पत्राण्यपि निवेदयेत् ॥
रक्तं रुद्रजटञ्चैव रक्तञ्च करवीरकम् ।
तथा रक्ततया देवि! शस्तं भास्करपूजने ॥
सर्वेषाञ्चैव पुष्पाणां श्रेष्ठञ्च करवीरकम् ।
एकञ्च करवीरञ्च रक्तपद्मसहस्रकम् ॥
प्रतिपुष्पे चाश्वमेधफलं सम्यक् प्रजायते ।
तस्मात् सर्वप्रयत्नेन करवीरेण पूजयेत् ॥
अभावे करवीरस्य त्रिवारं वाग्यतः स्मरेत् ।
उच्चरेत् करवीरेति न तथा कोटिजाप्यतः ॥
प्रीतिः स्यात् करवीरस्य न तथा याति भास्करः ।

संवत्सरस्य मध्ये तु वारैकं समस्रोव्रतम् ॥
सूर्य्यतीर्थे सकृत् कृत्वा पुनाति सप्तमं कुलम्।
अपराह्णं परं कालं परेशानि! विजानीहि ॥
न्यूनातिरिक्ते देवेशि! न सिद्धिर्जायते भुवि।
द्विपक्वं वर्जयेद् यस्माद् घृतञ्चैव कलायकम् ॥
कशेरु शृङ्गवेरञ्च लवणञ्च कषायकम्।
अम्लञ्चैव तथा तिक्तं दूषितञ्च न भक्षयेत् ॥
शिलापात्रेण भोक्तव्यं रौप्यताम्रे कदाच न।
मदनस्य दक्षभागे धनुःपंक्तिप्रमाणतः ॥
तीर्थं गङ्गासरो नाम तत्र स्नात्वा महत् फलम्।
गङ्गातीरे नरः स्नात्वा पितॄन् देवांश्च तर्पयेत् ॥
ब्रह्मलोकं समाप्नोति रविसङ्क्रमणे ग्रहे।
विष्णुपादरजःसम्भूते! गङ्गे! त्रिपथगामिनि! ॥
धर्मद्रवि! सरित्श्रेष्ठे! त्राहि मां सर्वपातकात्।
तुलायां मकरे चैव शुक्लाष्टम्याञ्च भाविनि! ॥
स्नानमात्रेण स नरो विष्णुलोके महीयते।
तस्य दक्षिणदिग्भागे धनुरष्टप्रमाणतः ॥
आगस्त्यं परमं तीर्थं मृतानां भुक्तिमुक्तिदम्।
यः स्नुत्वा मज्जयेन्मर्त्त्यः सर्वज्ञत्वमवाप्नुयात् ॥
स्वयं देवो महादेवो विष्णुस्तत्र च संस्थितः।
कामाख्यायाश्च क्रीड़ार्थमागस्त्यं कुण्डमुत्तमम् ॥
सर्वपापहरं शुद्धं विष्णुब्रह्मादिभिर्युतम्।
देवदानवविद्याधृग्वन्दितं सर्वकामदम् ॥
नानारत्नादिभिश्छन्नं सोपानं सुमनोहरम्।
अगस्त्येनोत्पादितं कुण्डं महादेव्याश्च तुष्टये ॥
माघे च कार्त्तिके चैव शुक्लपक्षे वरानने!।

दशम्यां स्नानमात्रेण पुष्करस्य फलं लभेत् ॥
शतजन्मकृतं पापं तत्क्षणादेव नश्यति ।
सहस्रजन्मजं पापं विषुवे च दिनक्षये ॥
पौषे च कर्कटे चैव कृष्णाष्टम्यां महेश्वरि ! ।
स्नानञ्च वर्जयेद्देवि ! भार्य्याहानि र्भवेद्‌यतः ॥
यथा वाराणसी पुण्या तथा पुण्या न संशयः ।
गुह्यतीर्थं परं देवि ! नात्र कार्य्या विचारणा ॥
एतद्‌गुह्यतमं क्षेत्रमेतद्‌ गुह्यतरं परम् ।
यत्र गत्वा नरः सद्यो मुच्यते सर्वपातकैः ॥
यत्र देवो महादेवो यत्र देवी सरस्वती ।
गङ्गादिसरितः सर्वाः समुद्राः सप्त एव हि ॥
नदाः शोणादयो यत्र तीर्थानि च सरांसि च ।
किंवा वामे परीतस्य कुण्डस्य परमेष्ठिनः ॥
न शक्यं विस्तराद्‌वक्तुं मया जलजलोचने ! ।
यथा चराचरं सर्वं त्रैलोक्यं त्रासयेल्लघु ॥
तथा त्रायस्व मां नित्यं तीर्थवर्य्ये ! नमोऽस्तु ते ।
आग्नेये तस्य क्षेत्रस्य किञ्चित् पश्चिमगोचरे ॥
एकविंशद्धनुर्मानं वासवं नाम तीर्थकम् ।
वासवे परमे तीर्थे स्नात्वाभ्यर्च्य च वासवम् ॥
शक्रवीजेन देवेशि ! इष्टस्य सदनं व्रजेत् ।
वक्ष्यमाणेन मन्त्रेण धरण्यार्घ्यं निवेदयेत् ॥
वासवाख्यं महातीर्थं सर्वपापप्रणाशनम् ।
तवाम्भसि निमज्याथ यथोक्तफलदो भव ॥
तस्य पश्चिमतो देवि ! नातिदूरे व्यवस्थितः ।
धनुःसप्तप्रमाणेन रम्भातीर्थं महेश्वरि ! ॥
रम्भातीर्थे नरः स्नात्वा रूपवानभिजायते ।

सह भर्ता मृता भवति स्नानान्नारी पतिव्रता ॥
रम्भालोकञ्च तदनु तदन्ते भवनं हरेः।
याति नास्त्यत्र सन्देहः शेषे च गुरुवासरे ॥ ७
ब्रह्मकर्मसमुद्भूते ! सर्वकामप्रदे ! शुभे !।
कामद्रवि ! नमस्तेऽस्तु त्राहि मां भवसागरात् ॥
स्नात्वानेन च रम्भायै मन्त्रेणार्घ्यं निवेदयेत्।
क्षेत्रस्य पश्चिमे भागे धनुस्त्रिंशत्प्रमाणतः ॥
तत्रैव रुक्मिणीकुण्डं स्नात्वा ब्रह्मपुरं व्रजेत्।
मुखस्य चालनं कृत्वा नारी वा पुरुषोऽपि वा ॥
रूपवान् परलोके तु जायते नात्र संशयः।
स्नानं कन्दर्पबीजेन शृणु चालनमन्त्रकम् ॥
ब्रह्मविष्णुमहेशानैः चालितं वदनं त्वयि।
रूपवानश्विनो याति रूपं सत्येन देहि मे ॥
वायव्ये तस्य क्षेत्रस्य धनुरष्टाप्तसम्मितम्।
पितॄणां परमं तीर्थं स्नानाद्याति परां गतिम् ॥
पितृतीर्थ ! महाभाग ! स्वयं देवाष्टसत्कृत !।
त्वमिहेतो ! महाभाग ! अघोरान्मां पुनीहि च ॥
अत्र स्नात्वा च मन्त्रेण पितृमेधफलं लभेत्।
आगस्त्यस्य तु दक्षे च गत्वा स्नात्वा च तर्प्य च ॥
धनुर्वेदप्रमाणञ्च गवाचागति वै सरः।
तत्र गत्वा च सप्तम्यां पितॄणामनृणो भवेत् ॥
गयातीर्थं महातीर्थं पितॄणां नास्ति तत्समम्।
पावनः सर्वतीर्थेषु स मां पुनातु पापतः ॥
अनेन स्नानं कृत्वा तु उत्तीर्य्य धौतवाससी।
पिधाय तिलकं दद्यात् क्षेत्रं कुर्य्यात् प्रदक्षिणम् ॥
कृत्वा दशाश्वक्षेत्रे च पिण्डं दद्यात् समाहितः।

तत्र देवि ! षोड़शके पितॄन् समर्चयेद्बुधः ॥
क्षीरेण मधुना चैव पादापनयनेन च ।
दक्षिणाद्दिक्क्रमाच्चात्र एकैकैर्हस्तकं चतुः ॥
वेदीषोड़शकस्तत्र प्रतिवेदीं समर्चयेत् ।
गयाकूपे नरः स्नात्वा दृष्ट्वा देवमुमापतिम् ॥
आत्मानं तारयेत् सद्यो दश पूर्वान् दशापरान् ।
विष्णुर्ब्रह्माद्यरुद्रश्च अगस्त्यश्च शतक्रतुः ॥
गणेशश्चैव क्रौञ्चश्च कुमारश्च प्रजापतिः ।
च्यवनः कश्यपश्चैव पुलस्त्यश्च यथाक्रमात् ॥
अश्वक्रान्तस्य वृद्धेऽवमागस्त्येऽमृतवासरे ।
अत्र मातुः पृथक् पिण्डमन्यत्र पतिना सह ॥
दशाश्वमेधे यः पिण्डं नाम्ना येषान्तु निर्वपेत् ।
नाकस्थाश्च दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥
येऽस्मत्कुले च पितरो लुप्तपिण्डोदकक्रियाः ।
ये चाप्यकृतचूड़ाश्च ये च गर्भाद्विनिःसृताः ॥
येषां दारा विक्रेयाश्च येऽग्निदग्धास्तथापरे ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्ति परां गतिम् ॥
पिता मातामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥
यथा मातामहश्चैव प्रमातामह एव च ।
ये च सिंहव्याघ्रसर्पप्रहृता निहताश्च ये ॥
दंष्ट्रिभिः शृङ्गिभिर्वापि तेषां पिण्डं ददाम्यहम् ।
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे ॥
विद्युच्चौरहता ये च तेषां पिण्डं ददाम्यहम् ।
पशुयोनिगता ये च पक्षिकीटसरीसृपाः ॥
अथवा वृक्षयोनिस्थास्तेषां पिण्डं ददाम्यहम् ।

असंख्यजनसंस्था ये ये नीता यमशासनम् ॥
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्।
जात्यन्तरसहस्राणि भ्रमन्ति स्वेन कर्मणा ॥
मनुष्यान्तर्गतं येषां यातनाशतमाहृतम्।
अन्येषां यातनास्थानां प्रेतलोकनिवासिनाम् ॥
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्।
ये बान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः ॥
तेषान्तु तृप्तिमायान्तु पिण्डदानेन सर्वदा।
ये ये पितृकुले जाताः कुले मातुस्तथैव च ॥
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः।
ये ये-कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ॥
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा।
विरूपा वा सगर्भा ये ये च जाताः कुले मम।
तेषां पिण्डं मया दत्तमक्षय्यमुपतिष्ठताम् ॥
ये बान्धवा ये पितृवंशजाता मातुस्तथा ये भवनादिजाताः।
कुलद्वये ये मम दासभूता भृतास्तथैवाश्रितसेवकाश्च ॥
मित्राणि सख्यः परसख्यश्च वृक्षाः पुण्याश्च दुष्टाश्च कृतोपकाराः।
जन्मान्तरे ये मम दासभृत्यास्तेषामिमं पिण्डमहं ददामि ॥
सूर्य्यकुण्डस्य वायव्ये धनुर्दण्डान्तरे स्थितः।
देवो गदाधरस्तत्र प्रणिपत्य प्रदापयेत् ॥
साक्षिणः सन्तु मे देवा ब्राह्मणा वसवस्तथा।
मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥
आगतोऽहं गयां देव ! पितृकार्य्ये गदाधर !।
त्वमेव साक्षी भगवाननृणोऽहं ऋणत्रयात् ॥
पितृपिण्डस्य मध्ये तु पिण्डं दद्याच्च षोड़श।
वर्त्तुलं कारयेत् पिण्डं क्षीरधारासु पातयेत् ॥

गदाधरस्य वै वामे नातिदूरेण शङ्करि ! ।
तत्र मातृगया देवि ! दक्षिणेन सुतीर्थकम् ॥
तथा गदाधरं देवं मुक्तिदं पुरुषोत्तमम् ।
तं प्रणम्य प्रयत्नेन न भूयो जायते नरः ॥
मौनादित्यं महात्मानं कनकार्कं विशेषतः ।
दृष्ट्वा मौनेन विप्रर्षिः पितृणामनुगो भवेत् ॥
ब्रह्माणं पूजयित्वा च ब्रह्मलोकमवाप्नुयात् ।
उर्वश्या दक्षिणे तीरे या शिला कनकप्रभा ॥
सा विज्ञेया च गायत्री पूजयेद्गन्धचन्दनैः ।
गायत्रीं प्रातरुत्थाय उपागस्य तु नासशः ॥
सन्ध्यां कृत्वा प्रयत्नेन सर्ववेदफलं लभेत् ।
सावित्रीञ्चैव मध्याह्ने दृष्ट्वा यज्ञफलं लभेत् ॥
दशाश्वमेधे धनदो देवदेवो जनार्दनः ।
तत्र पिण्डप्रदानेन तृप्तिर्भवति शाश्वती ॥
गयायां पितृरूपेण देवदेवो जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात् ॥
दृष्ट्वा पितामहं देवं सर्वपापैः प्रमुच्यते ।
मकरे वर्त्तमाने च ग्रहणे चन्द्रसूर्य्ययोः ॥
दुर्लभस्त्रिषु लोकेषु आगस्त्ये पिण्डपातनः ।
आत्मजो वा तथान्यो वा मया कूपेऽश्वमेधिके ॥
यन्नाम्ना पातयेत् पिण्डं तं नयेद् ब्रह्म शाश्वतम् ।
तद्ब्रह्मकल्पितं स्थानं विप्रा ब्रह्मप्रकल्पिताः ॥
पूजितैः पूजिताः सर्वे पितृभिः सह देवताः ।
तर्पयेत्तु गयाविप्रान् हव्यकव्यविधानतः ॥
स्नानं देहिपरित्यागो गयायान्तु विधीयते ।
यः करोति महादानं वृषोत्सर्गं करोति यः ॥

दशाश्वमेधिके तीर्थे मुक्तिदे स च मानवः।
चतुःषष्टिधनुर्मानं चेत्रमागस्त्यमीरितम्॥
पञ्चपञ्चाशतं तीर्थमुक्तं तीर्थं सुमध्यमे!।
उर्वशी च तथा सूर्य्यः कामः पुत्रश्च वासवः॥
आगस्त्यश्चाश्वमेधश्च तीर्थसारो गयाविलः।
उद्बन्धनमृता ये च गलपाशमृताश्च ये॥
पतिदुष्टा च या नारी क्रिया तेषां न विद्यते।
नान्त्येष्टिर्न च दाहश्च नाशौचं तेषु विद्यते॥
आगस्त्ये च गयायाञ्च क्रियां कुर्य्यात्त्रिरात्रकम्।
अमायाञ्च समारभ्य कुर्य्याच्चैव त्रिरात्रकम्॥
अन्यत्र च क्रियां तेषां यः करोति सुदुर्मतिः।
विफला च क्रिया तेषां चरेच्चान्द्रायणं व्रतम्॥
ततः शुद्धिमवाप्नोति अन्यथा पातकी भवेत्।
अन्यतीर्थे कृतं पापं गयायान्तु विनश्यति॥
गयायां यत् कृतं पापं रामचेत्रे विनश्यति।
रामचेत्रे कृतं पापं मणिकूटे विनश्यति॥
मणिकूटे कृतं पापं नीलशैले विनश्यति।
नीलशैले कृतं पापमन्तर्गेहे विनश्यति॥
अन्तर्गेहे कृतं पापं सोमतीर्थे विनश्यति।
सोमतीर्थे कृतं पापं मङ्गलायां व्यपोहति॥
मङ्गलायां कृतं पापं आगस्त्ये तु विनश्यति।
आगस्त्ये यत् कृतं पापं मन्दरे तद्विनश्यति॥
मन्दरे यत् कृतं पापं वज्रलेपे विनश्यति।
वज्रलेपाच्च यत् पापं अश्वक्रान्ते विनश्यति॥
अश्वक्रान्ते कृतं पापं उर्वश्यां तद्व्यपोहति।
माहात्म्यश्रवणेनाथ संहिताश्रवणेन वै।

दिनं नयेन्महेशानि ! रात्रौ विष्णुविचिन्तनम् ॥
कृत्वा वासन्तु तत्रैव नक्तं भोज्यं न वर्त्तयेत् ।
ततोऽन्यदिवसे कात्या आगस्त्ये स्नानमाचरेत् ॥
भस्माचलं स्पृशन् धारा सा विज्ञेया सरस्वती ।
तत्र स्नात्वा महेशानि ! अग्निष्टोमफलं लभेत् ॥
विष्णोर्वक्षःस्थिते ! भद्रे ! मकरन्दप्रिये ! शुभे ! ।
जन्मजन्मार्जितं पापं हर मे परमेश्वरि ! ॥
स्नायादनेन मन्त्रेण कार्त्तिकीञ्च विशेषतः ।
देवस्य पूर्वभागे तु वापी तिष्ठति शोभना ॥
तस्याः स्वच्छोदकं पीत्वा पुनर्जन्म न विद्यते ।
आग्नेये भस्मशैलस्य धनुरष्टप्रमाणतः ॥
पिशाचमोचनं नाम तीर्थं परमकं शुभे ! ।
पिशाचमोचने तीर्थे पूजयामास शूलिनम् ॥
इदं देवस्य तल्लिङ्गं कपर्दीश्वरमुत्तमम् ।
वायव्ये भस्मकूटस्य धनुर्मदनमानतः ॥
कपालमोचनं नाम तीर्थेभ्यस्तीर्थमुत्तमम् ।
पूजनीयं प्रयत्नेन स्तोतव्यं विविधैः स्तवैः ॥
कपालं पतितं तस्य स्नानस्य मम सुन्दरि ! ।
तस्मिन् स्नातो वरारोहे ! ब्रह्महत्यां व्यपोहति ॥
कपालेश्वरमीशानमस्मिन् तीर्थे व्यवस्थितम् ।
तस्योत्तरे धनुःपञ्च कपिला नाम वै शिवे ! ॥
तत्र स्नात्वा वरारोहे ! मुच्यते भवबन्धनात् ।
कपिलाह्रदतीर्थेऽस्मिन् स्नात्वा संयतमानसः ॥
वृषध्वजं शिवं दृष्ट्वा सर्वयज्ञफलं लभेत् ।
पूर्वाशाभिमुखेनैव आरोहेद् भस्मकूटकम् ॥
वक्ष्यमाणेन मन्त्रेण पूजयित्वा प्रशस्यते ।

वृषाचल ! नमस्तेऽस्तु धर्ममार्गत्रिपिष्टप ! ॥ ४
आरोहयामि शिखरं भस्मकूट ! नमोऽस्तु ते ॥
पश्चिमाभिमुखं यस्तु आरोहेत् पर्वतं यदि ।
दशजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥
उत्तराभिमुखो यस्तु यश्च ऐशान्यसम्मुखः ।
धनं पुत्रं कलत्रञ्च सर्वं नश्यति तत्क्षणात् ॥
अन्यद्द्वारं प्रवक्ष्यामि गुह्याद् गुह्यतरं शुभम् ।
वृषध्वजस्य माहात्म्यं शृणु देवि ! वरानने ! ॥
संयुक्ता सोमवारेण अमावस्या भवेद् यदि ।
तदा भस्माचलं गत्वा देवमभ्यर्च्य यत्नतः ॥
कुलैकविंशमुद्धृत्य स गच्छेत् परमं पदम् ।
गन्धाद्यैः स्नापयेल्लिङ्गं कमलैः सुमनोहरैः ॥
पञ्चामृतेन तोयेन चन्दनेन विलेपयेत् ।
महास्नानं ततः कुर्य्यान्मासान्ते प्रतिपर्वणि ॥
विल्वपत्रेण सम्पूज्य रत्नतोयेन स्नापयेत् ।
प्रासादेन तु मन्त्रेण रुद्रपुष्पेण पूजयेत् ॥
वन्धूकेन जयन्तेन मालूरेण विशेषतः ।
ध्येयः प्रीतो देवदेवः पिनाकी पांशुनेत्रैर्दीप्यमानैस्तृतीयैः ।
लोलैः साक्षात् सर्वपापौघहर्त्ता विश्वद्रुद्रो यश्चतुरो देवदेवः ॥
बिभ्रद्वासश्चर्म वैयाघ्रकाण्डं भूत्वा शुभ्रं शशिकान्तं वपुश्च ।
देव्या गात्रे नीलदेहो मुखञ्च स्पृशन् पाणिं पाणिना सुप्रसन्नः ॥
पत्रेषु पूजयेदेता देवताः परमेष्ठिनः ।
धाम धर्मं तथा सूक्ष्मं विष्णुं नारायणं हरम् ॥
विजयं विरजं विश्वं मध्यादि प्रतिपूजयेत् ।
शक्तीः सम्पूजयेच्चैव रामाद्याः प्रोक्तलक्षणाः ॥
बाह्ये सम्पूजयेत्तथा श्रीकण्ठाद्यांश्च तद्वहिः ।

पीठेशांश्च तथा बाह्ये पीठेशांश्चाग्रतोऽर्च्चयेत् ॥
त्र्यम्बकेण मन्त्रेण पूजयेत् कमलां विना ।
नन्दीशं मुकुटञ्चैव दिक्पालान् पूजयेत् क्रमात् ॥
एवं सम्पूज्य देवेशं पूजाभिर्भक्तिमान्नरः ।
प्रणम्य परमेशानं इदं स्तोत्रमुदाहरेत् ॥
ओं नमो विश्ववर्णाय हिरण्याय हिरण्यकर्णाय च ।
हिरण्यकृतचूड़ाय हिरण्यपतये नमः ॥
ईशानवक्त्रसम्भूत ! हरिकेश ! नमोऽस्तु ते ।
नमो बालार्कवर्णाय ज्वलद्रूपधराय च ॥
नमोऽशुद्धाय शुद्धाय सौभगाय च्यवाय च ।
भवाङ्गोज्झितकेशाय मुक्तकेशाय वै नमः ॥
नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च ।
वर्णाश्रमेण विधिवत् पृथक् कर्मप्रवर्त्तिने ॥
नमः शेशेय शेशाय नमः कारकणाय च ।
श्वेतपिङ्गलनेत्राय कृष्णवक्त्रेक्षणाय च ॥
धर्मकर्मार्थमोक्षाय सर्वपापहराय च ।
नमस्त्रिशूलहस्ताय उमाकान्ताय वै नमः ॥
ईशानवक्त्रसम्भूत ! हरिकेश ! नमोऽस्तु ते ।
प्रसीद पार्वतीकान्त ! उमानन्दाय वै नमः ॥
ततोऽनुज्ञां समादाय कृताञ्जलिपुटः करः ।
प्रणम्य पूजयित्वा च इमं मन्त्रमुदीरयेत् ॥
उमानन्द ! नमस्तेऽस्तु पार्वतीप्रीतिवर्द्धन ! ।
निर्विघ्ना यातु मे सिद्धिर्यस्मात् पूजा कृताऽद्य मे ॥
जगन्नाथ ! प्रसादेन श्रीमत्कामेश्वरं शिवम् ।
अर्चयाम्यद्य देवेश ! आज्ञया ते महेश्वरम् ॥
प्राच्यं तस्य समभ्यर्च्य विश्वक्सेनं जनार्दनम् ।

देवस्य पश्चिमे भागे मातङ्गं नाम चेत्रकम्॥
धनुर्द्वाविंशमानेन तत्र वासे न शोचति।
तत्र यत् पातकं कृत्वा अन्यद् ब्रह्मवधे समम्॥
तत्र तत्र सुकृतं किञ्चित् अग्निष्टोमफलं लभेत्।
मातङ्गं पूजयेत्तत्र गङ्गाद्यैर्भक्तिमान्नरः॥
मायावोजेन देवेशि! भावेन सुसमाहितः।
तत्रस्थो मन्दिरं पश्येद्दक्षिणाभिमुखेन तु॥
स सर्वंकुलमुद्धृत्य ब्रह्मलोके महीयते।
नमो मन्दरशैलाय विष्णुरूपाय वेधसे॥
तान् दृष्ट्वाय च स्वर्गस्थो भवपापं व्यपोहतु।
वोचेत् सन्ध्याचलं पश्चादिमं मन्त्रमुदीरयेत्॥
युगकोटिसहस्राणि यत् पापं समुपार्जितम्।
चपासिगजवक्त्रे च साक्षी भव मतङ्गज!।
ततोऽर्घ्यं भानवे दद्यात्तिलवारिकुशान्वितम्॥
उत्थाय प्रणिपातेन दद्यादाचमनीयकम्।
आदित्यस्य व्रताङ्गे तु अर्घ्यदाने विशेषतः॥
उपविश्य ततो दद्यादन्यतोत्थाय दापयेत्।
अधोमुखञ्चार्घ्यपात्रं दत्त्वार्घ्यान्ते विचक्षणः॥
तत्र चण्डेश्वरं सूर्यं प्रणिपत्य विसर्जयेत्।
दशाश्वमेधनैर्ऋत्ये दाक्षिण्ये मम सुन्दरि!॥
इषुक्षेपान्तरे यच्च संस्थितं कलिपर्वतम्।
तत्रारोहणमात्रेण सुकृतञ्च विनश्यति॥
दुःखितं लिप्यती गात्रे कलिः स्पृशति नान्यथा।
कलिः स्पृशति यां धारां सा धारा मम वाहिनी॥
सर्वं कलिमलं तीर्थं तथैनं परिवर्जयेत्।
मन्दरस्य हि चैशान्यां धनुःषोड़शकं सितम्॥

चक्रतीर्थं महातीर्थं सर्वपापप्रणाशनम् ।
ब्रह्महत्यादिदोषजञ्चैव पातकं यत् कृतं बहु ॥
कृष्णे शुक्ले चतुर्थ्याञ्च दृष्ट्वा सिंहे च चन्द्रकम् ।
तद्दोषात् पातकं यच्च सर्वं स्नानाद्विनश्यति ॥
अस्थीनि पातयेद् यस्तु सप्तरात्रौ मम प्रिये ! ।
चक्राङ्कितं भवेद्देवि ! नात्र कार्य्या विचारणा ॥
चक्रतीर्थे मृतं सर्वं धारणाद् योऽपि चन्दनम् ।
तत्फलं प्राप्य तेजस्वी मृते हरिपुरं व्रजेत् ॥
द्वारकायां समुद्भूत ! द्विजन्मभवसागरात् ।
तीर्थराज ! नमस्तेऽस्तु त्राहि मां भवबन्धनात् ॥
मन्त्रेणानेन स्नात्वा तु सवित्रेऽर्घ्यं निवेदयेत् ।
चक्रतीर्थे नरः स्नात्वा वेधसं यस्तु पूजयेत् ॥
दश पूर्वान् दश परान् आत्मानञ्चैव तारयेत् ।
चक्रतीर्थं स्पृशन् शैलं नन्दनं नाम पर्वतम् ॥
धनुर्द्विषष्टिमानञ्च पश्चिमेनैव सुन्दरि ! ।
जनार्दनञ्च देवेशं कलौ बौद्धस्वरूपिणम् ॥
तं दृष्ट्वा मुच्यते पापैर्महाघोरैः सुदारुणैः ।
कर्कशं पौण्ड्रवर्द्धञ्च या शिलाचक्र उद्यता ॥
मन्दरस्य च पाश्चात्ये शुभशैलस्य भाविनि ! ।
जनार्दनस्य चिह्नञ्च रूपञ्च परिकीर्त्तितम् ॥
उत्तरे तस्य शैलस्य ऐशान्यां विरजा तथा ।
दक्षिणे गजशैलस्य पश्चिमे शौभ्रलिङ्गकम् ॥
एतन्मध्यतमं क्षेत्रमागस्त्यं नाम वै गया ।
एवं शतमितं क्षेत्रमसम्भवादिकं स्मृतम् ॥
एतदाद्यां विजानीयादन्यल्लोहितमुच्यते ।
तत्र पिण्डप्रदानेन पितॄणां परमा गतिः ॥

जनार्दनस्य हस्ते च स्वाहापिण्डं समर्पयेत् ।
एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ! ॥
परलोकगतं मह्यं त्वं हि दाता भविष्यसि ।
कलिशेषस्य पूर्वे तु धनुरष्टप्रमाणतः ॥
सा शिला प्रेतभावेन पितॄणां तरणाय च ।
तत्र पिण्डप्रदानेन न प्रेतो जायते क्वचित् ॥
चक्रतीर्थस्य चाग्नेये धनुर्द्वन्द्वप्रमाणतः ।
लिङ्गं लौलं परं तीर्थं तिलदुग्धैः प्रतर्पयेत् ॥
जनार्दनं ततो वीक्ष्य मुच्यते वै ऋणत्रयात् ।
कलिद्वापरयोः सन्धौ धनुरर्द्धप्रमाणतः ॥
शुक्रेण स्थापितं लिङ्गं शुक्रेशं नामतः श्रुतम् ।
देवं शुक्रेश्वरं दृष्ट्वा को न मुच्येत बन्धनात् ॥
गोलेश्वरं ततो दृष्ट्वा मुच्यते ब्रह्महत्यया ।
अङ्गारेशञ्च सिद्धेशं गयादित्यं गजं तथा ॥
मार्कण्डेयेश्वरं दृष्ट्वा पितॄणामनृणो भवेत् ।
गयागोलेश्वरं दृष्ट्वा स्नापयित्वा जनार्दनम् ॥
एतेन किं न पर्य्याप्तं नृणाञ्च शुद्धिकारणम् ।
ब्रह्मलोकं प्रयान्तीह पुरुषा एकविंशतिः ॥
पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च ।
चक्रतीर्थं गमिष्यन्ति वारमेकं दिने दिने ॥
पृथिव्याञ्च गया पुण्या गयायां कूपकं तथा ।
कूपादष्टगुणं देवि ! श्रेष्ठा मातृगया शुभे ! ॥
पुत्रो मातृगयां गत्वा अनृणो भवति क्षणात् ।
गयायां पिण्डदानेन पितॄणामनृणो भवेत् ॥
गयान्तं पिण्डदानञ्च गयान्तं तीर्थमेव च ।
पञ्चकान्तं कामरूपं पिच्छिलान्ता सरित् शुभे ! ॥

जनार्दनस्य हस्ते तु पिण्डं दद्यात् स्वकं नरः ।
विरजे च तथा चाश्वे कर्णिवामे च सोमके ॥
जीवत्पिण्डप्रदानेन अल्पायु र्जायते नरः ।
यत्नागस्त्ये महाक्षेत्रे स्वकं पिण्डं ददेत्तु यः ॥
मासद्वयाधिकं वर्षमायुषो वर्द्धते क्रमात् ।
स्वहस्ते तु वृषोत्सर्गं यः करोत्यौर्द्ध्वदैहिकम् ॥
परलोकगते देवि ! अक्षयं तदपि स्मृतम् ।
पित्रोश्च जीवतोः पुत्रो न कुर्य्यादौर्द्ध्वदैहिकम् ॥
बहुपुत्रे चैकपुत्रे पुत्रे वा योगसेविते ।
क्षयक्षणगते पुत्रे निपुत्रे वा महेश्वरि ! ॥
चत्वारिंशत्परो देवि ! स्वयमात्मक्रियाञ्चरेत् ।
दानञ्चैव वृगोत्सर्गं कुर्य्यान्नैव दशाह्निकम् ॥
दम्पत्यो र्जीवतोः कुर्य्याद् वृषोत्सर्गद्वयं सदा ।
एकत्र मण्डले कुण्डे वृषोत्सर्गं पृथक् चरेत् ॥
मृते कुर्य्यादेकगुणं जीवितेऽष्टगुणं फलम् ।
परगोत्रकृते चैव स्वल्पाल्पं फलमाप्नुयात् ॥
उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
कृत्वा स्वजनसम्भाषां ग्रामस्यापि प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनात् ।
कृत्वा प्रदक्षिणं गच्छेत् प्रतिग्रहविवर्जितः ॥
गृहाचारनिमात्रञ्च आगस्त्यगमनं प्रति ।
स्वर्गारोहणसोपानः पितॄणान्तु पदे पदे ॥
दिवा च सर्वदा रात्रौ आगस्त्ये श्राद्धकृद्भवेत् ।
अश्वतीर्थे कृतं श्राद्धं नीलकूटे च पञ्चके ॥
रामाश्रमे सोमकूटे श्राद्धी स्वर्गं नयेत् पितॄन् ।
आगस्त्ये मण्डलं कृत्वा दृष्ट्वा देवं जनार्दनम् ॥

आरुह्य मन्दरं शैलं पुनाति सप्तमं कुलम् ।
सांवत्सरं गयाश्राद्धं पार्वणं प्रतिपर्वणि ।
निरामिषं कृतं श्राद्धं तथाच विषुवद्दये ॥
सपिण्डाः पितरस्तस्य निराशाः सर्वदा गताः ।
आमश्राद्धे आममांसं प्रदद्यादविचारतः ॥
पितरोऽधोमुखगतास्तिष्ठन्ति न मम प्रिये ! ।
सामिषन्तु कृतं श्राद्धं यस्तु भुङ्क्ते निरामिषम् ॥
तामिस्रनरकं गच्छेत् पितृभिः सह नान्यथा ।
दीर्घतन्तुमयं कुर्य्याद् गृहीत्वा तत्र शङ्करि ! ॥
श्राद्धाचारं विना कुर्य्याद् व्रतमेवं मम प्रिये ! ।
निरामिषः कृती तेन कुर्य्यात् श्राद्धं निरामिषम् ॥
भोक्ता निरामिषं भुङ्क्ते सामिषं न कदाचन ।
सद्यो निमन्त्रयेत् श्राद्धे कर्म कुर्य्याद्विचक्षणः ॥
शूद्रेण निन्दिते विप्रे श्राद्धयज्ञे सुरेषु च ।
ब्राह्मणं भोजयेद् यस्तु भुङ्क्ते विष्ठाञ्च शङ्करि ! ॥
माहिषं वृहदाजञ्च मेषञ्च चामरं तथा ।
गोधां कूर्मञ्च शाल्वञ्च शाशकं शौकरं तथा ॥
वाराहञ्च तथा मेषं श्राद्धे देयानि सर्वशः ।
अकलौ तु गवां मांसं सारमेयञ्च तत्त्ववित् ॥
हीनेन्द्रियं छागलञ्च न कृष्णं तस्य वर्जयेत् ।
कृष्णच्छागस्य मांसेन पितॄन् यस्तु प्रतर्पयेत् ॥
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ।
हीनेन्द्रियं विना छागमांसै र्यस्तु प्रतर्पयेत् ॥
महाभयकरं प्रोक्तं तस्मात्तत् परिवर्जयेत् ।
माहिषं द्वादशाब्देन तृप्तिर्भवति शाश्वती ॥
सांवत्सरन्त्व आजेन छागैः पार्वति ! षट् समाः ।

चामरेण शतं वर्षं साहस्रं गोधया प्रिये !॥
षण्मासञ्च वरारोहे ! कूर्मेण मासमात्रकम्।
वाराहेण तु षण्मासं शाशकेन नवैव तु॥
द्वाविंशन्मासकेनैव क्षुद्रवाराहके तथा।
शताब्दं चामरेणैव स्थूलमांसन्तु वर्जयेत्॥
यत्र वर्ज्यं भवेत् पुंभिश्चतुर्भिः षड़्भिरेव च।
अतिस्थूलमिति प्रोक्तं तस्मात् तत् पूर्वसूरिभिः॥
माहिषस्य च गव्यस्य वराहस्य मम प्रिये !।
मार्गस्य वृहदाजस्य स्थूलस्यापि हि शस्यते॥
खाङ्गं पाश्वनखं भक्ष्यमभक्ष्यं खड्गसंयुतम्।
चतुर्नखं वारिजातं वर्जयेच्च मम प्रिये !॥
गोधिकां स्वर्णखड्गञ्च चामरं कृष्णमेव च।
वर्जयेत् कूर्मकं विद्वान् यदि चक्रेण चिह्नितम्॥
सिंहशुण्डं रोहितञ्च राजीवं चित्रकं तथा।
महाशल्कं प्रौष्ठिकञ्च मत्स्यञ्च पर्वतीयकम्॥
वृहद्रोहितमत्स्यञ्च वृहत्प्रौष्ठिकमेव च।
वृहच्छल्कञ्च चित्रञ्च श्राद्धे यत्नेन योजयेत्॥
मत्स्यांश्च शल्कहीनांश्च सर्पाकारांश्च वर्जयेत्।
शल्कहीनस्य मध्ये तु प्रदेयं कचकद्वयम्॥
प्रेताकारादिकं यच्च विकृताकारमेव यत्।
सर्पास्यान् पीवरांश्चैव रजनांश्च विवर्जयेत्॥
जीवांशं शेलुकञ्चैव पद्मकं कुङ्कुमं तथा।
स्वर्णकं ग्रन्थिवर्णञ्च श्राद्धे यत्नेन वर्जयेत्॥
धूम्रञ्च पञ्चकदलं शर्कराकीटसंयुतम्।
महिषस्य घृतं क्षीरमाज्यं श्राद्धे विवर्जयेत्॥
नारिकेलञ्च तालञ्च खर्जूरं पीनकं तथा।

तक्रं घृतं विना क्षीरं प्रयत्नेन विवर्जयेत् ॥
दीपं वर्जेद् रन्ध्रवर्त्त्यां प्रत्यक्षं तैलमेव च ।
कुसुम्भं नालिकाशाकं मालतीकुसुमं तथा ॥
वृद्धिश्राद्धे पङ्कजञ्च करवीराणि वर्जयेत् ।
न प्रदद्यात्तु गाङ्गेयं द्रव्यं रक्तजलोद्भवम् ॥
विना वस्त्रेण यच्छ्राद्धं विना यज्ञोपवीतकम् ।
विना तिलेन देवेशि ! विना गव्येन निष्फलम् ॥
अभावे चैव वस्त्रस्य कुशमाल्यं निवेदयेत् ।
अभावे यज्ञसूत्रस्य सूत्रयुग्मन्तु विन्यसेत् ॥
शूद्रश्राद्धे च स्त्रीश्राद्धे यज्ञसूत्रं विवर्जयेत् ।
ताम्बूलेन विना श्राद्धं पर्णचूर्णेन शङ्करि ! ॥
अभावे जीवकं दद्यात् पायसं मधुसंयुतम् ।
एकजातीयपात्रे तु दद्यादन्नं समाहितः ॥
दैवतं प्रथमं दद्यात् पितृपात्रे निवेदयेत् ।
पितृशेषन्तु दैवे तु पुनरन्नं कदाचन ॥
निरग्नेरामश्राद्धे तु अन्नं न चालयेत् क्वचित् ।
वृद्धौ च चालयेदन्नं संक्रमे ग्रहणेषु च ॥
अष्टमुष्टिप्रमाणेन ब्राह्मणैकसंक्रमात् ।
अतोऽधिकञ्च न्यूनञ्च न दद्यात् श्राद्धकर्मणि ॥
यः श्राद्धं पद्मपत्रे च करोति सुमनोहरम् ।
वर्षाणान्तु शतं साग्रं तृप्तिर्भवति नान्यथा ॥
अश्वत्थस्य च्छदे देवि ! ब्रह्मपात्रे च शङ्करि ! ।
षण्मासं जायते तृप्तिरनन्ताश्वत्थपत्रके ॥
मासैकं ताम्रपात्रे च रुक्मपात्रे तु वत्सरम् ।
रौप्ये दशगुणं प्रोक्तं खड्गपात्रे शतोत्तरम् ॥
एकजातीयपात्रे तु मृताहे श्राद्धकर्मणि ।

पार्वणे च तथा वृद्धौ पृथक्जातींश्च योजयेत् ॥
संवत्सरं भवेत्तावद् व्रीहींश्चैव नियोजयेत् ।
वर्षाद्भवति यो व्रीहिः प्रेतश्राद्धे विवर्जयेत् ॥
धान्यं वर्षासमुद्भूतं तिलं यावानकञ्च यत् ।
यज्ञादौ च तथा श्राद्धे द्विःखिन्नं परिवर्जयेत् ॥
षष्टिधान्यं राजधान्यं वृहद्धान्यञ्च वल्लभम् ।
सोमधान्यं शिम्बधान्यं वङ्गानि रक्तशालिकम् ॥
केतकीं कलविङ्कञ्च धान्यं नारायणं तथा ।
माधवञ्च प्रदीपञ्च विष्णुधान्यञ्च वल्लभम् ॥
भोग्यधान्यमशोकञ्च नागाद्यं पञ्चकं तथा ।
धान्यानि श्राद्धयोग्यानि वेदेषु च नियोजयेत् ॥
गोधूमैश्च यवैश्चैव अपूपैश्च महेश्वरि ! ।
नीवारांश्च तथा श्राद्धे देवधान्यं तथा परम् ॥
वसन्ते रोपितं धान्यं यत्नेन च विवर्जयेत् ।
तदन्नभक्षणादेव पापं संक्रमते नृणाम् ॥
भक्षणे श्रावणान्नस्य दरिद्रश्चाभिजायते ।
भक्षणे सोमधान्यस्य व्रतं चान्द्रायणञ्चरेत् ॥
भक्षणे वृद्धधान्यस्य विभवो जायते किल ।
राजधान्यं शिम्बधान्यं भक्षणाद्विष्णुलोकभाक् ॥
रक्तशाल्योदनं भुक्त्वा विजयश्रीमवाप्नुयात् ।
नारायणं माधवस्य भोगञ्च मम सुन्दरि ! ॥
धान्यन्तु यावसं भुक्त्वा नरः ख्यातिमवाप्नुयात् ।
निमन्त्रितं ब्राह्मणञ्च यदि श्राद्धे विवर्जयेत् ॥
दारुणं नरकं गच्छेद् यावदाभूतसंप्लवम् ।
निमन्त्रितो यदि गृहे भुङ्क्ते विप्रः कथञ्चन ॥
स गच्छेत् कालसूत्रञ्च शौकरीं योनिमाविशेत् ।

निमन्त्रितो व्रतस्थश्च ब्रह्मचार्य्यथवा पुनः ॥
नातिक्रामिच्च तत् श्राद्धं न दोषो मधुभक्षणे ।
सद्योहृतं सदा धान्यं मांसं तैलं तथैव च ॥
व्रतस्थभक्षणे देवि ! न दोषः पितृयज्ञके ।
गयाश्राद्धे प्रेतपक्षे तथानुमरणे प्रिये ! ॥
ग्रहणे तीर्थश्राद्धे च न जिघ्रेत् पिण्डकं प्रिये ! ।
मुक्तितीर्थं विना विप्रो नानुगच्छेत् स्वकं पतिम् ॥
पृथक् चितां नानुगच्छेन्मुक्तिमार्गेषु सर्वदा ।
क्रिया कार्य्या दशाहेन अन्यत्र तु निवारकम् ॥
उद्बन्धनमृतञ्चैव तथा जलगते शवे ।
पर्य्युषिते शवे चैव क्षयकुष्ठिशवे तथा ॥
ब्राह्मणी नानुगच्छेच्च मुक्तितीर्थाहृते प्रिये ! ।
बहुपुत्रा सगर्भा च तथा चैव रजस्वला ॥
पतिता कुलहा चैव असती न कदाचन ।
ततोऽनुगमनार्थञ्च एकाहं स्थापयेत् शवम् ॥
अनुगच्छेत् परेद्युश्च न दोषस्तत्र जायते ।
विदेशमरणे चैव भर्त्तुर्यद्वस्तु विद्यते ॥
तद्द्रव्यं हृदये कृत्वा क्षत्रादीनामनुव्रजेत् ।
भावावगुण्ठिता वाथ सती शूद्रा भवेत् क्वचित् ॥
तस्यानुमरणं कुर्य्याद् वैश्यस्य च विधिः स्मृतः ।
तृतीयायां मृतो भर्त्ता चतुर्थ्यामप्यनुव्रजेत् ॥
भर्त्तुरेव तिथौ तस्याः कुर्य्यात् संवत्सरे बुधः ।
एकत्र मरणे देवि ! पिण्डमेकत्र निर्वपेत् ॥
युगपत् कारयेत् श्राद्धं समाप्यैवं न तद्भवेत् ।
दम्पत्योश्चैव पिण्डञ्च वर्त्तुलं कारयेन्नरः ॥
वस्त्रेणावरणं कुर्य्यान्मधु क्षीरं निपातयेत् ।

न पिण्डेन सह क्षीरं शुष्कान्नं न कदाचन ॥
न घृतं माहिषाज्यञ्च धात्रिकं लकुचं तथा ।
दाड़िमं वीजपूरञ्च ऊर्वारुकफलं तथा ॥
जम्बूफलञ्च पक्वाच्च कदलीं रामकं त्यजेत् ।
कशेरुञ्च युगानञ्च कपिलाक्षीरमेव च ॥
तथा जम्बूफलं पक्वं श्राद्धे देयानि यत्नतः ।
अपक्वं कीटदुष्टञ्च मूलकं करमर्दकम् ॥
विल्वञ्च तिन्दुकञ्चैव मधुकं मधुरीं तथा ।
जम्बूफलञ्च पक्वाच्च जीवन्तीञ्च निवेदयेत् ॥
ब्राह्मणैः क्षत्रियै वैंश्यैः श्राद्धं सुवचसोदितम् ।
कुलधर्ममनुज्ञाय दातव्यं मन्त्रपूर्वकम् ॥
त्रिभि वंर्णैं वंरैः शूद्रै र्देयं विप्रानुशासनात् ।
मन्त्रवर्जञ्च विधिवद् वह्निपाकविवर्जितः ॥
पुष्करादिषु तीर्थेषु पुण्येष्वायतनेषु च ।
शिखरेषु गिरीन्द्राणां पुण्यदेशे तु शङ्करि ! ॥
सरित्सु पुण्यतोयेषु सरित्सु च नदेषु च ।
सङ्गमेषु नदीनाञ्च सागरेषु च सप्तसु ॥
देवतायतने चैव गोष्ठे च धात्रीमूलके ।
दिव्यपादपमूलेषु तुलसीमध्यगेषु च ॥
दशार्णेषु कुमार्य्येषु मगधेषु कुशेषु च ।
विरजस्योत्तरे तीरे लौहित्यस्य च दक्षिणे ॥
दक्षिणे नर्मदायाश्च आगस्त्यस्य च दक्षिणे ।
पूर्वेषु करतोयाया न देयं श्राद्धमुच्यते ॥
श्राद्धं देयं वदन्तीह मासि मासि उपक्षये ।
पौर्णमासीषु श्राद्धञ्च कर्त्तव्यमक्षगोचरे ॥
नित्यश्राद्धं सदेवञ्च मनुष्यैः सह गीयते ।

नैमित्तिकं सुरैः सार्द्धं नित्यं नैमित्तिकं तथा॥
काम्यानि यानि श्राद्धानि प्रतिसंवत्सरं द्विजैः।
वृद्धिश्राद्धञ्च कर्त्तव्यं कर्माकर्मादिकेषु च॥
तत्र स्नानं हि जानीहि मातृपूर्वन्तु शङ्करि!।
कन्यागते सवितरि दिनानि दश पञ्च च॥
पार्वणेन विधानेन श्राद्धं कुर्य्याद्विचक्षणः।
यो ददाति गुड़ैर्मिश्रान् तिलान् वा श्राद्धकर्मणि॥
मधुना मधुमिश्राणि चाक्षयं मनुनैव यत्।
कृत्तिकासु पितॄनार्च्य मुक्तिमाप्नोति मानवः॥
अपत्यकामो रोहिण्यां सौम्यतेजस्वितां लभेत्।
मघासु च प्रजां पुष्टिं सौभाग्यं फाल्गुनीषु च॥
नक्षत्रेष्वपि चान्येषु कर्त्तव्यं कामचारतः।
अपि नः पितरो यस्य मृताः शस्त्रेण वाहवे॥
तेन कार्य्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता।
यदा पञ्चदशश्राद्धं कर्त्तव्यं काम्यभावतः॥
चतुर्दश्यां समेतञ्च षोड़षश्राद्धमिष्यते।
दशम्यादिकमारभ्य पञ्चम्यादिकमेव च॥
तदा वर्ज्यं चतुर्दश्यां तिथौ देवान् समाचरेत्।
श्राद्धं कुर्य्यादमावस्यां मासि मासि तदा क्वचित्॥
सर्वान् कामानवाप्नोति मृते च स्वर्गमश्नुते।
नित्यश्राद्धे तर्पणे च सुरार्चा-नित्यपूजने॥
भोजने ब्राह्मणानाञ्च दक्षिणा न हि विद्यते।
श्राद्धाशक्तौ प्रेतपक्षे ब्राह्मणान् भोजयेत् प्रिये!॥
देवेभ्योऽन्नं जलं दद्यादेवञ्चापि निवेदयेत्।
पित्रोश्च जीवतो देवि! यत्नादौ श्राद्धवासरे॥
भोजयेन्नवमीत्येव [illegible] विविधैरपि।

अभोजिते हतो यज्ञः श्राद्धञ्चापि हतं भवेत् ॥
वृद्धौ श्राद्धे पार्वणे च नित्यश्राद्धं विवर्जयेत् ।
ब्राह्मणानां बहूनाञ्च भोजने च महेश्वरि ! ॥
राजसूयाश्वमेधाय यदिच्छेद् दुर्लभं पदम् ।
गयां गङ्गां गतो गत्वा कुर्य्यात् श्राद्धं विधानतः ॥
अप्यस्वं, शाकमूलान्नैः शक्तुभिर्यावनीयकैः ।
तावत् पितृपुरी शून्या यावद्विष्णोः प्रबोधनम् ॥
प्रबोधे समतिक्रान्ते पितृ, वा दैवतैः सह ।
निश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदुष्करम् ॥
गयाश्राद्धं गयास्नानं तथा च तिलतर्पणम् ।
खड्गपात्रेण देवेशि ! जीवत्पित्रादि वर्जयेत् ॥
सोमवारे त्वमावास्यामौनं स्नानं विवर्जयेत् ।
यस्य माता मृता देवि ! तस्य मातृगया प्रिये ! ॥
यदि श्रेष्ठः पिता देवि ! पितृव्यमरणेऽपिवा ।
मातापित्रो जीवतोश्च न कदापि गयां व्रजेत् ॥
पितृपिण्डं प्रदद्यात्तु, भोजयेच्च पितामहम् ।
प्रपितामहस्य पिण्डेऽपि एवं शास्त्रेषु निश्चितम् ॥
मृतेषु पिण्डं दातव्यं ब्राह्मणांश्चापि भोजयेत् ।
सपिण्डीकरणं नास्ति न च पार्वणमिष्यते ॥
दक्षिणापूरणं सिद्धं विविक्तं शुभलक्षणम् ।
शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ॥
पावकस्य भूमिभागे च पितॄणां नैव निर्वपः ।
शमनीयगृहे देवि ! पापागारं विवर्जयेत् ॥
भिक्षुको ब्रह्मचारी च भोजनार्थमुपस्थितः ।
उपविष्टेषु श्राद्धेषु कामभृदपि पूजयेत् ॥
सह क्रिया देशकालौ द्रव्यब्राह्मणसम्पदः ।

पञ्चेति पितरो घ्नन्ति तस्माङ्के हेतुविस्तरम् ॥
अपि वा योजयेद्देवं ब्राह्मणं वेदपारगम् ।
भूयोऽपि देवसन्तुष्ट्यै तत् कार्य्यं वा करोति यः ॥
न कार्य्यं तद् भवेत् श्राद्धं तन्त्रेणापि समापयेत् ।
वैश्वदेवस्य चारम्भे तत् श्राद्धञ्च विवर्जयेत् ॥
प्रासादीकरणे चैव यात्रायां गृहकर्मणि ।
न विद्यते श्यामपक्षे तन्त्रस्नानं विवर्जयेत् ॥

इति योगिनीतन्त्रे सर्वतन्त्रोत्तमे द्वाविंशतिसाहस्रे
कामरूपाधिकारे द्वितीयभागे
पञ्चमः पटलः ।

---

## अथ षष्ठः पटलः ।

श्रीभगवानुवाच ।

द्वितीयेऽन्यदिने देवि ! यत् कृतं शृणु पार्वति ! ।
चक्रतीर्थे नरः स्नात्वा भस्मकूट ! नमोऽस्तुते ॥
लौहित्यदक्षिणं गत्वा वायव्ये कोलपर्वतः ।
तस्य पश्चिमदिग्भागे पाण्डुनाथो महाबली ॥
तस्य वायव्यभागे तु धनुर्द्वादशकं सरः ।
ब्रह्मकुण्डमिति ख्यातं सर्वपापप्रणाशनम् ॥
किं जप्यैः किं तपोभिश्च किं दानैः किं सुतैरपि ।
ब्रह्मकुण्डे नरः स्नात्वा सिद्धिं विन्दति तत्क्षणात् ॥
ईश्वरानुज्ञया पूर्वमुषितं ब्रह्मणा पुरा ।
स्नानार्थं सम्प्रधावन्ति तत्तीर्थं देवदानवाः ॥
ऋषयः सिद्धगन्धर्वास्तीर्थानि च सरांसि च ।
माहात्म्यमखण्डलं तस्य ब्रह्मकुण्डस्य सुन्दरि ! ॥

तीरेण स्नात्वा विधिवद् दानं दद्याद् यथाविधि ।
मणिकाञ्चनरत्नानि यथाविभवमात्मनः ॥
सम्भवे सति यो मोहात् न स्नाति स नराधमः ।
पच्यते नरके घोरे यावदिन्द्राश्चतुर्दश ॥
तस्य दक्षिणदिग्भागे धनुःपञ्चप्रमाणतः ।
लौहित्यं नाम तत्तीर्थं स्नानान्नश्यति पातकम् ॥
स्नानेन तीर्थराजस्य तथा सर्वाघसंक्षयः ।
तीर्थराजसरः पुण्यं सर्वतीर्थफलप्रदम् ॥
भूतानि यानि तीर्थानि सरितश्च सरांसि च ।
विशन्ति सर्वतीर्थानि सरितश्च सरांसि च ॥
राजा समस्ततीर्थानां सागरः सरितां पतिः ।
तस्मात् समस्ततीर्थेषु श्रेष्ठोऽसौ सर्वकामदः ॥
तमोनाशं तथा ज्योतिर्भास्करे उदिते प्रिये ! ।
स्नानेन तीर्थराजस्य तथा सर्वाघसंक्षयः ॥
तीर्थराजसमं तीर्थं न भूतं न भविष्यति ।
अधिष्ठानं सदा यत्र प्रभो र्नारायणस्य वै ॥
कः शक्नोति गुणान् वक्तुं तीर्थराजस्य मे प्रिये ! ।
तिस्रो नवत्यः कोट्यश्च यत्र तीर्थानि सन्ति वै ॥
तस्मात् स्नानञ्च दानञ्च होमं जाप्यं सुरार्चनम् ।
यत् किञ्चित् क्रियते पुण्यं चाक्षयं भवति प्रिये ! ॥
नमस्ते ब्रह्मपुत्राय नमः शान्तनुसूनवे ।
त्रिजन्मजञ्च यत् पापं हर लौहित्य ! सर्वदा ॥
इत्यनेन तु मन्त्रेण स्नात्वा चार्घ्यं निवेदयेत् ।
पूजयेत् परया भक्त्या मन्त्रेणानेन भाविनि ! ॥
तीर्थानां परमं श्रेष्ठं हंसं वामाक्षिसंयुतम् ।
आसनं हृदयं वह्नेः प्रिये ! ध्रुववपुः सरः ॥

तस्य दक्षिणतो भागे नातिदूरे च संस्थितः।
कुलं धान्वन्तरं यावद् विष्णुकुण्डमिति श्रुतम्॥
विष्णुकुण्डे नरः स्नात्वा संवीक्षेत् पाण्डुशैनकम्।
गुरुचारुशिलारूपं अग्रे मञ्जुसमन्वितम्॥
पञ्चानामश्वमेधानां फलं प्राप्नोति मानुषः।
प्राणस्थः सर्वभूतानां योनिश्च सरितां पतिः॥
विष्णुकुण्ड! नमस्तेऽस्तु त्राहि मां मुच्यते प्रिये!।
स्नात्वानेन वरारोहे! एकादश्याञ्च फाल्गुने॥
सर्वपापविनिर्मुक्तः सर्वदुःखविवर्जितः।
वृन्दारकहयः श्रीमान् रूपयौवनगर्वितः॥
विमलेनार्कवर्णेन दिव्यगन्धर्वसेविना।
कुलैकविंशमुद्धृत्य विष्णुलोकञ्च गच्छति॥
तस्य दक्षिणकोष्ठायां किञ्चिन्नैऋत्यगोचरे।
एकादशधनुर्मानं शिवकुण्डमिति श्रुतम्॥
तत्राभिषेकमात्रेण रुद्रलोकं स गच्छति।
शिवकुण्डे चतुर्दश्यां मासि मासि मम प्रिये!॥
स्नात्वारुणोदये काले न प्रेतो जायते भुवि।
तीर्थानां परमं तीर्थं विष्णुस्नानसमुद्भवम्॥
सरित्पते! नमस्तेऽस्तु त्राहि मां त्वं शिवप्रियः।
स्नात्वा चानेन मन्त्रेण हंसेनार्घ्यं निवेदयेत्॥
ततो व्रजेत् पाण्डुशैलं गन्धतोयेन स्नापयेत्।
पूजयेत् कमलैः श्वेतैः करवीरैः सितैः शुभैः॥
विष्णवे पदमाभाष्य पाण्डुनाथाय सत् पदम्।
जवाद्यञ्च नतिः पश्चादुद्धरेत् जनकादिषु॥
चतुर्दशार्णो बालो यत् शिखान्तं समुदीरितम्।
नारदोऽस्य ऋषिश्छन्दो गायत्री देवता हरिः॥

विनियोगञ्च सर्वार्थे काम्येषु च विशेषतः ।
श्वेतञ्च द्विभुजं विष्णुं चक्रशङ्खलसत्करम् ॥
वरदं देवगन्धर्वसेवितं कामदं सदा ।
ध्यानं कृत्वार्चयेद्धीमान् पात्रपूर्वादितः क्रमात् ॥
लक्ष्मीं सरस्वतीं गङ्गां यमुनां नर्मदां शिवाम् ।
बालाञ्च कमलाञ्चैव तथा सङ्कर्षणादिकम् ॥
दिक्पतींश्च ग्रहांश्चैव विश्वक्सेनं प्रपूजयेत् ।
लौहित्ये विधिवत् स्नात्वा पाण्डुनाथं प्रपूजयेत् ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।
मन्वन्तरगतं साग्रं जरामृत्युविवर्जितः ॥
पुण्यक्षयादिहागत्य कुले सर्वगुणान्विते ।
जायते प्रेतवन्नैव धार्मिको याति वैष्णवम् ॥
मन्त्रं जपमर्चयेच्च इष्टमन्त्रेण पूजयेत् ।
पाण्डुनाथ ! नमस्तेऽस्तु नमस्ते मोक्षकारक ! ॥
त्राहि मां सर्वलोकेश ! विष्णुरूप ! नमोऽस्तु ते ।
निर्मलाम्भोद सङ्काश ! नमस्ते पुरुषोत्तम ! ॥
नमस्ते पुण्डरीकाक्ष ! पाण्डुनाथ ! नमोऽस्तु ते ।
नमस्ते हेमगर्भाभ ! नमस्ते गरुड़ध्वज ! ॥
ब्रह्मरूप ! नमस्तेऽस्तु नारायण ! नमोऽस्तु ते ।
नमस्तेऽञ्जनसङ्काश ! नमस्ते भक्तवत्सल ! ॥
पाण्डुनाथ ! नमस्तेऽस्तु त्राहि त्राहि नमोऽस्तु ते ।
नमस्ते विबुधावास ! नमस्ते विबुधप्रिय ! ॥
नारायण ! नमस्तेऽस्तु त्राहि मां शरणागतम् ।
नमस्ते विबुधश्रेष्ठ ! नमस्ते कमलोद्भव ! ॥
चतुर्मुख ! जगद्धाम ! पाण्डुरूप ! नमोऽस्तु ते ।
नमस्ते नीलमेघाभ ! नमस्ते त्रिदशार्चित ! ॥

त्राहि विष्णो! जगन्नाथ! पाण्डुरूप! नमोऽस्तु ते।
नरसिंह! महावीर्य्य! त्राहि मां दीप्तलोचन!॥
विष्णुरूप! नमस्तेऽस्तु पाण्डुनाथ! नमोऽस्तु ते।
देवस्य नैऋते भागे धनुःपञ्चप्रमाणतः॥
अश्वत्थचिह्नितं क्षेत्रं धर्मक्षेत्रं विजानीहि।
संहितां प्रजपेत्तत्र गीतशास्त्रञ्च सञ्जपेत्॥
चतुर्युगेन सञ्जप्यं मन्त्रेणैव च तत् फलम्।
लभते नात्र सन्देह एकावर्त्ते सहस्रकम्॥
क्षेत्रस्यारोहणाद्देवि! कुरुक्षेत्रफलं लभेत्।
देवस्य पूर्वभागे तु धनुस्तावत् प्रमाणतः॥
स्वच्छाकृतिश्चारुशिला सा लक्ष्मीः परिकीर्त्तिता।
श्रीवीजेन समभ्यर्च्य मालतीकुसुमै र्यजेत्॥
विष्णुकुण्डे ततः स्नात्वा लक्ष्मीं जप्त्वा विधानतः।
पौर्णमास्यां तुलार्के तु लक्ष्मीस्तस्य प्रसीदति॥
तस्य दक्षिणदिग्भागे नातिदूरे च शङ्करि!।
धनुरष्टप्रमाणञ्च कोलक्षेत्रं विजानीहि॥
अश्वत्थमूले देवेशं कृष्णचारुशिलामयम्।
लोलं दृष्ट्वार्चयेद्भक्त्या विष्णुलोकं स गच्छति॥
ब्रह्मकूटस्य धनदे श्रीकुण्डं नाम वै सरः।
धनुर्युग्मप्रमाणेन तत्र स्नात्वा श्रियं लभेत्॥
चैत्रे शुक्लदशम्याञ्च एकादश्यां सिते शिवे!।
मन्त्रेण स्नात्वा श्रीतीर्थे गतिमाप्नोत्यनुत्तमाम्॥
श्रीवस्तु भगवच्छ्रेष्ठं आरोग्यविजयप्रदम्।
श्रियं देहि यशो देहि पापं हर नमोऽस्तु ते॥
तस्याः पूर्वे च द्वाविंशद्धनुरेव प्रमाणतः।
तीर्थं कनखलं प्रोक्तं महापातकनाशनम्॥

वैशाखस्य तृतीयायां शुक्लपक्षे विशेषतः ।
दक्षिणामूर्त्तिमन्त्रेण स्नात्वा स्वर्गे महीयते ॥
सरिच्छ्रेष्ठ ! महाभाग ! देवगन्धर्वसेवित ! ।
दशजन्मार्जितं पापं हर तीर्थ ! नमोऽस्तु ते ॥
तस्य दक्षिणभागे तु पर्वते च मनोहरे ।
धनुर्वेदप्रमाणञ्च चम्पकेशं समर्चयेत् ॥
कनखलं समुपस्पृश्य शुचिभावसमन्वितम् ।
मुच्यते सर्वपापैश्च ब्रह्मलोकं व्रजेद् यतः ॥
तस्य पूर्वे सप्तधनुः शुभे देवि ! प्रमाणतः ।
तीर्थं त्रैलोक्यविख्यातं ब्रह्मणः परमेष्ठिनः ॥
पुष्करं सर्वपापघ्नं मृतानां ब्रह्मलोकदम् ।
मनसा संस्मरेद् यस्तु पुष्करन्तु महेश्वरि ! ॥
मुच्यते पातकैः सर्वैः शक्रेण सह मोदते ।
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ॥
उपासते सिद्धसङ्घा ब्रह्माणं पद्मसम्भवम् ।
तत्र स्नात्वा भवेन्मुक्तो ब्रह्माणं परमेष्ठिनम् ॥
पूजयित्वा हि वरदं ब्रह्माणञ्च प्रपश्यति ।
तदाभिगम्य देवेशं पुरहूतमनिन्दितम् ॥
स्वरूपी जायते मर्त्त्यः सर्वान् कामान् समश्नुते ।
कमलास्य ! महाभाग ! नमस्ते च त्रिपुष्कर ! ॥
हुं ह्रूं ह्रौं सरितां नाथ ! पापं मे हर पुष्कर ! ।
अनेन स्नानं कुर्य्यात्तु अनेनार्घ्यं निवेदयेत् ॥
पुष्करस्य च नैर्ऋत्ये किञ्चिद्दामे मम प्रिये ! ।
अष्टाविंशद्धनुर्मानं तीर्थं वदरिकाश्रमम् ॥
तत्र गत्वार्चयेद्देवं नारायणमनामयम् ।
गोसहस्रफलं प्राप्य स्नात्वाभ्यर्च्य हरिं दिने ॥

नारायणस्याश्रमे तु यः कुर्य्याद्रोहिणीव्रतम्।
एकेन शतकोटीनां व्रतस्य फलमाप्नुयात्॥
तत्र लिङ्गं महेशस्य विभाण्डकमिति श्रुतम्।
प्रासादेन समभ्यर्च्य रुद्रत्वमधिगच्छति॥
पञ्चमोदावरं तीर्थं ब्रह्माद्यैः सेवितं परम्।
पूजयित्वा तत्र रुद्रं प्रसन्नं परमेश्वरम्॥
आराधयामास हरं पञ्चाक्षरपरायणम्।
पूजयित्वा नमस्कुर्य्याद् गोशतानां फलं लभेत्॥
पुष्करस्य च पूर्वे तु कुमारं नाम वै सरः।
कुमारतीर्थे यः स्नायाद् गाणपत्यञ्च विन्दति॥
कुमारतीर्थस्याग्नेये पञ्चाशद्धनुरायतम्।
नरमारण्यकं देवि सर्वदेवगणैर्वृतम्॥
कुमारेशपुरे वासो विष्णोः प्रियस्थिते रतः।
श्रीं श्रीं ईं ह्रूं जगद्व्याप्त! पापं हर कुमारक!॥
अनेन मज्जनं कृत्वा सुरेशार्घ्यं निवेदयेत्।
तत्र देवो महादेवः स्थाणुरित्यभिधीयते॥
तं दृष्ट्वा सर्वपापेभ्यो मुच्यते तत्क्षणान्नरः।
चम्पकेशस्य धनदे धनुर्द्विषष्टिमानतः
तद्वनं चम्पकं नाम सिद्धब्रह्मर्षिवन्दितम्॥
पुण्यमायतनं विष्णोस्तत्रास्ते पुरुषोत्तमः।
ब्रह्मकूटस्य धनदे शिलापञ्चसमध्यगम्॥
दुर्गाकूपं महाकूपं सर्वतोद्वारमेव हि।
दशाक्षरेण मन्त्रेण स्नात्वा कामानवाप्नुयात्॥
दुर्गाकूपे तथाष्टम्यां स्नात्वा काममनुं जपन्।
त्रिः कृत्वा पञ्चमं वाथ कृष्णविजयपुष्पकैः॥
पूजयित्वा परं देवं नरः श्रुतिधरो भवेत्॥

काकवन्ध्या तु या नारी मृतापत्या च या भवेत् ।
सापि तद्गतिमाप्नोति शरत्काले विशेषतः ॥
बन्धूकैः पूजयेत्तत्र देवीं कामेश्वरीं यदि ।
विल्वपत्रेण देवेशि ! शाश्वतीं सिद्धिमाप्नुयात् ॥
साधयेदीप्सितान् कामान् तत्र सिद्धिञ्च विन्दति ।
कौलश्च विष्णुशैलश्च शङ्करः परमेश्वरः ॥
ईशश्च पारिजातश्च कुमारश्च गणेश्वरः ।
नीलश्वेतोत्थभूभागे उत्तरे संस्थिताचलः ॥
मध्ये विष्णुस्तथा स्थाणुरथ धर्मबलस्तथा ।
कमलश्च शिखा चैव कपोतो मरुताचलः ॥
आग्नेये चाचलो देवि ! हस्तिकर्णो विकर्णकः ।
अमाचलो दक्षिणे तु मरुवकोऽथ प्रजेश्वरः ।
द्युमन्तः कनकश्चैव वायव्यो नीललोहितः ॥
मानशैलः कामाख्यो वह्निरिन्द्रः शतक्रतुः ।
लोहितः कमलश्चैव नैरृते निरृतिस्तथा ॥
गन्धर्वो लक्षणश्चैव पिशाचो विहगाचलः ।
पश्चिमे ब्रह्मयूपश्च हयमेधो गिरीश्वरः ॥
उत्तरे उत्तरश्चैव तथा चोत्तरपाण्डुकः ।
आदित्यो वायुकोणे तु वायुर्भल्लातकस्तथा ॥
धनदश्च महीध्रश्च जनकश्च नलस्तथा ।
ऐशान्यां मण्डलश्चैव अश्वक्रान्तः सचन्द्रकः ॥
यमश्चित्रवहश्चैव ग्रहश्चैव यथाक्रमात् ।
ततो गच्छेन्नीलशैलं मध्याह्ने परमेश्वरि ! ॥
अष्टम्याञ्च त्रयोदश्यां चतुर्दश्यामथापि वा ।
विषुवे अयने वाथ रविसंक्रमणे तथा ॥
पूर्वद्वारि यदा गच्छेत् प्राप्नुयाद्विपुलं धनम् ।

उत्तरे मुक्तिकामस्तु राज्यकामस्तु पश्चिमे ॥
यदा दक्षिणमार्गेण आरोहेन्नीलकूटकम् ।
हतराज्यो भवेद्राजा अन्येषां जायते क्षयः ॥
ऐशान्ये तु तदा गच्छेत् विपुलां श्रियमाप्नुयात् ।
वायव्ये चाग्निनैर्ऋत्ये महाभयकरं भवेत् ॥
नीलं दशभुजं शान्तं मणिकुण्डलमण्डितम् ।
नागहारोत्तरीयञ्च वृषभस्थं विचिन्तयेत् ॥
पूजयेद्वह्निवीजेन नमस्कृत्वा विधानतः ।
मन्त्रेणारोहयेत् शैलं अश्वमेधफलं लभेत् ॥
पूर्वद्वारे गृहस्यैव आरोहेन्नीलपर्वतम् ।
नीलश्चैव महावाहो ! धर्मकामार्थमोक्षदः ॥
आरोहयामि शिखरं पापं हर प्रसीद मे ।
दुर्गाकूपे तु पूर्वस्यां देवमाम्रातकेश्वरम् ॥
धनुस्त्रयान्तरे देवि ! पूजयेत् केशवादिना ।
तस्य देवस्य याम्ये तु धनुरष्टान्तरे प्रिये ! ॥
गजाकारं कृष्णवर्णं पूजयेद्गणनायकम् ।
तस्य पूर्वेणैव धनुः संस्थितश्च त्रिविक्रमः ॥
तं प्रणम्य नरो भक्त्या सर्वान् कामानवाप्नुयात् ।
तस्यांशपञ्चकं यावद् धनुरेव प्रमाणतः ॥
चत्वारिंशद्वस्तमानं सौभाग्यं नाम वै सरः ।
क्रीड़ापुष्करिणी सा तु कामाख्यायाः सुरेश्वरि ! ॥
शक्रेणोपासितः पूर्वं सह देवैः प्रजापतिः ।
तस्य पश्चिमतीरे च स्नात्वा तत्र च मण्डलम् ॥
कृत्वा सम्यग्विधानञ्च उपवासं समाचरेत् ।
पञ्चमेऽन्यदिने प्राप्ते जले स्नात्वा विधानतः ॥
क्रीड़ापुष्करिणीं गत्वा कामेशीं यस्तु पूजयेत् ।

पितॄन् सन्तारयत्याशु देवीलोके प्रमोदते ॥
सौभाग्ये सरिदावर्त्ते विमले मानसप्रिये ।
नमोङ्कारी वषट् स्वाहा पापं हर नमोऽस्तु ते ॥
मन्त्रेण मज्जनं कृत्वा कामेनार्घ्यं निवेदयेत् ।
ऐशान्ये तस्य कुण्डस्य लौहित्यो नाम वै सरः ॥
ध्रुवेण स्नात्वा देवेशि ! मुच्यते भवबन्धनात् ।
अग्नौ कुण्डं कालहस्तं यामलं नाम वै सरः ॥
तत्र स्नात्वा च पार्श्वेन रूपवान् जायते भुवि ।
नैरृत्ये पञ्चकं हस्तं सौभाग्ये परमेश्वरि ! ॥
गङ्गासरो विजानीयात् सर्वतीर्थोद्भवं जलम् ।
कोलाभ्यन्तर्गतं कुण्डं सौभाग्यं परिकीर्त्तितम् ॥
तिस्रः कोट्यर्द्धकोटी च दिवि भुव्यन्तरीक्षके ।
सौभाग्ये तानि सर्वाणि मन्दीभूते दिवाकरे ॥
तस्मात् समाचरेत् स्नानं कर्त्तव्यं मकरे रवौ ।
तुलाविषुवसङ्क्रान्त्यां यस्तु स्नानं समाचरेत् ॥
अभार्य्यो लभते भार्य्यां देवीलोके प्रमोदते ।
गोधिकाकाररूपेण व्यक्ताव्यक्तशिला च या ।
अनन्ताख्यं विजानीयात् कुण्डं तस्योपरि प्रिये ! ॥
अनन्तः पश्चिमे पार्श्वे पूर्वे कृष्णशिला च या ।
वराहं तं विजानीयात् सर्वतीर्थोद्भवं जलम् ॥
अभार्य्यो लभते भार्य्यां अपुत्रः पुत्रवान् भवेत् ॥
तुलायां वाथ कन्यायां शुक्लाष्टम्यां विशेषतः ।
स्नात्वा संवीक्षयेद्देवीमग्निष्टोमफलं लभेत् ॥
तर्पयेत् पितृदेवांश्च काम्यानन्यांश्च तर्पयेत् ।
सर्वतीर्थेषु देवेशि ! न कुर्य्यात् काम्यतर्पणम् ॥
अस्मिन् कुण्डे अश्वक्रान्ते आगस्त्ये च प्रयागके ।

वाराणसीह्रदे चैव भार्गवे मेरुपुष्करे ॥
गङ्गाह्रदे ब्रह्मसरे दुर्गाकूपे च भावयेत् ।
पृथ्वीप्रदक्षिणे यच्च फलं प्रोक्तं महर्षिभिः ॥
तत् फलं प्राप्यते तस्य कुण्डस्यैव प्रदक्षिणे ।
कुण्डस्याग्नेयभागे च तुलादूरे व्यवस्थितः ॥
कम्बलाख्यं शिवं दृष्ट्वा मुच्यते भवबन्धनात् ।
स्मरेण भावयुक्तेन नत्यन्तेन प्रपूजयेत् ॥
नमो नमस्ते देवेश ! मन्त्रवत् स विभूषितः ।
लक्ष्मीकान्त ! नमस्तेऽस्तु अनन्त ! पुरुषोत्तम ॥
देवदानवगन्धर्वपादपद्मार्चितः शुभः ।
नमो वरदलिङ्गाय कमलाय नमो नमः ॥
कलाकृतिं विष्णुरूपं नमस्कृत्वा मम प्रिये ! ।
स्तुत्वा प्रदक्षिणं कृत्वा ततो देवीगृहं व्रजेत् ॥
गत्वा शवासनं जप्त्वा वीक्षेत्तारेण शाङ्करि ! ।
पञ्चामृतेन तोयेन स्नापयेत् सुशुभे जलैः ॥
मूलमन्त्रेण तं देवं तेनपात्रेण मार्जयेत् ।
कामतन्त्रं कुशीतेन लिखेद्दक्षे मम प्रिये ! ॥
कामे कामं लिखित्वा तु तत्र पूजां समाचरेत् ।
देव्यङ्गे चित्रके पुष्टिमणौ खड्गे च शाङ्करि ॥
श्मशाने च महालिङ्गे प्रतिमायां जले तथा ।
यन्त्रे तन्त्रे शालग्रामे मण्डलञ्च विसर्जयेत् ॥
महाहोमे मण्डलञ्च महापातकमाप्नुयात् ।
न गृह्णाति च तत्पूजां पदं वष्णो व्रजेत् पुरम् ॥
न च योन्यन्तरगतं श्मशानस्य च पूर्वतः ।
महामण्डलकं देव्याः संस्थितस्तत्र पूजयेत् ॥
सप्ताशीतिधनुर्मानं रक्षोरक्तशिला च या ।

अष्टहस्तं सपुलकं लिङ्गं लक्षार्द्धसंयुतम् ॥
चतुर्हस्तसमं क्षेत्रं पश्चिमे योनिमण्डलम् ।
बहुमात्रमितञ्चैव प्रस्तारे द्वादशाङ्गुलम् ॥
आपातालं जलं तत्र योनिमध्ये प्रतिष्ठितम् ।
उर्वशी यमुना धारा कावेरी च सरस्वती ॥
ब्रह्मकुण्डे समुद्भूतं मणिकूटे च निर्मलम् ।
याति नास्त्यत्र सन्देहो यो विष्णुं पूजयेद् हृदा ॥
प्लावित्वा मण्डलं देव्या व्यक्तं ब्रह्मसरः प्रिये ! ।
मासत्रयाधिके षष्टिवर्षे शुष्कत्रला भवेत् ॥
द्विमासं त्रिदिनं यावत् षण्मासि तु विपत्करम् ।
यदा कुल्ये शुष्कधारा बाह्ये विण्मूत्रमादिशेत् ॥
वर्षे वर्षे यदा शुष्कधारा भवति शङ्करि ! ।
वाह्ये भवति दुर्भिक्षं तत्र कश्चिन्न संशयः ॥
गर्भे शुष्के स्वामिहा च सर्वशुष्के च संशृणु ।
हतराज्यो भवेद्राजा पराराष्ट्रसमागमः ॥
एवमेव भवेद्दोषस्तत्र शान्तिं समाचरेत् ।
लक्षद्वयं जुहुयाच्च करवीरं घृतान्वितम् ॥
पङ्कजं वाथवा रक्तं पायसं वाथ श्रीफलम् ।
त्रिमध्वाक्तेन देवेशि ! गोधामांसेन वा सुधीः ॥
शर्करा मधु मांसञ्च त्रिमधु परिकीर्त्तितम् ।
आवर्त्तितेन क्षीरेण आज्ययुक्तेन होमयेत् ॥
अनन्तस्य च पाश्चात्ये असि नाम स्थिता नदी ।
तत्पश्चिमे च या धारा वरुणा नाम सा नदी ॥
तस्याः स्वच्छोदकं पीत्वा न भूयो जायते क्वचित् ।
सिद्धेश्वरं कोटिलिङ्गं हेरुकं मुक्तिमण्डलम् ॥
क्षेयं धारा शमीक्षेत्रं देव्या अन्तर्गृहं श्रुतम् ।

लिङ्गस्थां पूजयेद्देवीं पुस्तके प्रतिमासु च ॥
स्थण्डिले पादुके चित्रे खड्गे वह्नौ जलेषु च।
लौहित्ये चैव गङ्गायां सागरे तीर्थसङ्गमे ॥
प्रतिपीठे विल्वमूले विल्वमुखे च शङ्करि!।
यत्र कालशिला चैव पीठं तन्मणिपूरकम् ॥
अन्तर्गृहं महापीठं मणिपीठं तदुच्यते।
शिलायां पर्वतस्याग्रे तथा पर्वतगह्वरे ॥
देवीं सम्पूजयेन्नित्यं भक्तिश्रद्धासमन्वितः।
वाराणस्यां यथा पूजा सम्पूर्णफलदायिनी ॥
ततस्तु द्विगुणा प्रोक्ता पुरुषोत्तमसन्निधौ।
सर्वक्षेत्रेषु तीर्थेषु पूजा कालशिलासमा ॥
कौमारेऽष्टगुणा प्रोक्ता चौहारे चैव तत्समा।
आर्य्यावर्त्ते मध्यदेशे ब्रह्मावर्त्ते तथैव च ॥
मणिपूरवत् फलदात्री श्रीहट्टे च महेश्वरि!।
ततश्चतुर्गुणा प्रोक्ता आगस्त्ये चाश्वमेधिका ॥
तस्माच्चतुर्गुणा प्रोक्ता जल्पीश्वरस्य सन्निधौ।
विराजते यत्र योनी ततो दशगुणा स्मृता ॥
ततश्चतुर्गुणा प्रोक्ता एकाम्रे परमेश्वरी।
तस्मात् शतगुणं भद्रे! मणिकूटे महेश्वरि!॥
तस्माद्दशगुणा चैव मणिशैले महेश्वरि!।
ततो दशगुणा प्रोक्ता अश्वतीर्थे जले स्थले ॥
तत्समा कामरूपे च सर्वत्रैव जले स्थले।
सर्वश्रेष्ठा यथा विष्णुर्लक्ष्मीः सर्वोत्तमा यथा।
देवीपूजा तथा शस्ता कामरूपे मम प्रिये!॥
देवीक्षेत्रं कामरूपं विद्यतेऽन्यत्र तत्समम्।
अन्यत्र विरला देवी कामरूपे गृहे गृहे ॥

कामाख्यायां महामायापूजां यः कृतवान् सकृत् ।
स चेह लभते कामान् परत्र शिवरूपताम् ॥
न तस्य सदृशोऽन्यत्तु कृतं किञ्च न विद्यते ।
वाञ्छितार्थमवाप्येह चिरायुरभिजायते ॥
स्नानकालेऽर्द्धरात्रौ च महापूजावसानके ।
न स्पृशेत्तु महामायां न गच्छेत् सिद्धिमानसः ॥
महाष्टम्यां निशाभागे तथा चैव दिनत्रये ।
युगादौ कार्त्तिके मासि कौमारे न विलोकयेत् ॥
राजानं वीक्षयेद्यस्तु शूद्रो रूपाढ्य एव च ।
विधवा ब्राह्मणी या च सदा स्नानेन वीक्षयेत् ॥
स्नानकाले च मध्याह्ने निर्माल्यस्य विसर्जने ।
न स्त्री देवीं स्पृशेज्जातु युवती च विशेषतः ॥
पौषाष्टम्यां तथा भद्रे ! नवम्याञ्च त्रयोदशीम् ।
त्रिदिनं कर्कटस्यादौ न व्रजेत् पार्वतीगृहम् ॥
स्पृष्ट्वा ददाति शापञ्च दृष्ट्वा चायुःक्षयो भवेत् ।
दीक्षितेनैव भावेन न चैवादीक्षितेन च ॥
रक्ताम्बरधरो भूत्वा रक्तचन्दनभूषितः ।
नागजैस्तिलकं कुर्य्यात् मृदुचर्मणि संविशेत् ॥
दीयते ज्ञानमत्यर्थं चीयते पाशबन्धनम् ।
ततो दीक्षेति देवेशि ! कथिता तत्त्वचिन्तकैः ॥
मनसा कर्मणा वाचा यत् पापं समुपार्जितम् ।
तेषां विशेषकरणी परमज्ञानदा यतः ॥
तस्मात् दीक्षेति लोकेऽस्मिन् गीयते शास्त्रकोविदैः ।
विज्ञानफलदा सैव द्वितीया लयकारिणी ॥
तृतीया मुक्तिदा चैव तस्माद्दीक्षेति गीयते ।
निरालम्बा निराधारा दीक्षासिद्धिविधानतः ॥

नित्ये नैमित्तिके काम्ये यस्य स्यादधिकारिता।
सा धारा सा हि विज्ञेया मुक्तिदा तु निराश्रया॥
दीक्षा फलवती तत्र कुण्डमण्डलपूर्व्विका।
मनोव्यापारमात्रेण निर्व्वीर्य्या सम्मता तथा॥
अपुत्रो मृतपुत्रश्च कुण्डश्च वामनस्तथा।
कुनखी श्यावदन्तश्चाधिकाङ्गः स्त्रीजितस्तथा।
आचार्य्योऽपि हि देवेशि! एवमेवं विसर्जयेत्॥
सुमूर्त्तिश्च कुलीनश्च ज्ञानाचारगुणान्वितः।
तेन देया च दीक्षा स्यात् समायाचारवित्तथा॥
पित्रोर्मन्त्रं न गृह्णीयात्तथा मातामहस्य च।
स्वप्नलब्धञ्च स्त्रीदत्तं संस्कारेणैव शुध्यति॥
स्वप्नलब्धे च कलसे गुरोः प्राणं निवेशयेत्।
वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं तथा।
ततः शुद्धिमवाप्नोति अन्यथा विफलं भवेत्॥
अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः।
रवेः संक्रान्तिदिवसे युगाद्यायां सुरेश्वरि!॥
मन्वन्तरासु तिथिषु चतुर्दश्यष्टमीषु च।
महापूजादिने वापि शिष्यशुद्धिदिनेषु वा॥
गृह्णीयात् प्रयतो भूत्वा भक्तिश्रद्धासमन्वितः।
देवीपूजाविधौ यस्तु मनुष्यो भक्तितत्परः॥
स एव दीक्ष्यो नान्यस्तु सर्वशास्त्रार्थतत्परः।
चैत्रे दुःखाय दीक्षा स्याद् वैशाखे सर्वसिद्धिदा॥
ज्यैष्ठे मृत्युप्रदा सा स्याद् आषाढ़े बहुवत्सका।
श्रावणे बहुहानिः स्याद् भाद्रे च दुःखदा मता॥
आश्विने सर्वसिद्धैः सा कार्त्तिके ज्ञानवृद्धिदा।
शुभकृन्मार्गशीर्षे च पौषे ज्ञानविनाशिनी॥

माघे च मेधावृद्धिः स्यात् फाल्गुने सर्वशस्यभाक् ।
ग्रहणे च महातीर्थे नास्ति कालस्य निश्चयः ॥
गयायां भास्करक्षेत्रे विरजे चन्द्रपर्वते ।
कोङ्कने च च मतङ्गे च तथा कन्याश्रमेषु च ॥
न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्वति ! ।
कर्त्तव्यं दीक्षितैः शिष्यैर्गुरोः शासनमुत्तमम् ॥
देवता हृदये यत् स्याद् गुरुपूजापरायणः ।
पुरश्चरणचारी स्याद् विशुद्धात्मा जितेन्द्रियः ॥
मन्त्रयन्त्रपुराणानि भारतीश्च गयादिषु ।
प्राप्तमित्येवमानोऽपि गुरूणां जापितं सदा ॥
न स्त्रीहिंसा प्रकर्त्तव्या शिष्येणैव महेश्वरि ! ।
सयवं चक्रवाकञ्च क्रौञ्चं पारावतं तथा ॥
नीलशैलादिशैलञ्च सदा तस्य प्रियो भवेत् ।
इत्येवं दीक्षितेनैव कर्त्तव्यं दिवसं तथा ॥
रात्रौ भुक्त्वा तथा यत्नाद् ध्यात्वा सम्पूजयेद्बुधः ।
तस्यापि पूर्वदिवसं हविष्यं वा निरामिषम् ॥
भुक्त्वा परस्मिन् दिवसे हविष्यञ्च समाचरेत् ।
चरुं श्रपित्वा भागार्द्धं देवतायै निवेदयेत् ॥
तदर्द्धं गुरवे दद्यात् पूर्णन्तु स्वयमेव हि ।
भुक्त्वा च गुरुणा सार्द्धं सर्वदीक्षास्वयं विधिः ॥
मन्त्रं दत्त्वा गुरुश्चैव उपवासी यदा भवेत् ।
मोहान्धकारनरके कृमि र्भवति नान्यथा ॥
दीक्षां कृत्वा यदा मन्त्री उपवासं चरेद्यदि ।
तस्य देवः सदा रुष्टः शापं दत्त्वा व्रजेत् पुरम् ॥

इति योगिनीतन्त्रे सर्वतन्त्रोत्तमे द्वाविंशतिसाहस्रे
द्वीतियभागे षष्ठः पटलः ॥

## अथ सप्तमः पटलः ।

श्रीभगवानुवाच । शोभने निर्जने देशे निगूढ़े शुभमण्डले ।
पुष्पप्राकारसङ्कीर्णे गन्धपुष्पादिवासिते ॥
तृतीयवर्जिते देशे पशुदृष्टिविवर्जिते ।
फलिकादौ ततो मन्त्री मन्त्रं तत्र समुद्धरेत् ॥
विना मन्त्रसमुद्धारं स्वल्पाल्पफलदं मतम् ।
यन्त्रे समुद्धरेन्मन्त्रं ताम्बूलं वा प्रपूरितम् ॥
न भूमौ विलिखेन्मन्त्रं न तथा पुस्तके लिखेत् ।
न भूमौ पुस्तकं स्थाप्यं नाहरेड्डाकिनीं ततः ॥
भूकम्पे ग्रहणे चैव अक्षरं वाथ पुस्तकम् ।
भूमौ तिष्ठति देवेशि ! जन्मजन्मनि मूर्खता ॥
तदा भवति देवेशि ! तस्मात्तं परिवर्जयेत् ।
वंशे नैवोल्लिखेद्वर्णं तस्य हानि र्भवेद्ध्रुवम् ॥
ताम्रसूच्या हि विभवो जायते न क्षयो भवेत् ।
महालक्ष्मीप्रदश्चैव सुवर्णस्य शलाकया ॥
वृहन्नलस्य सूच्या वा मतिवृद्धिश्च जायते ।
तथा अग्निमये देवि ! पुत्रपौत्रधनागमः ॥
रौप्येण विपुला लक्ष्मीः कांस्येन मरणं भवेत् ।
अष्टाङ्गुलप्रमाणेन दशाङ्गुलमथापि वा ॥
चतुरङ्गुलसूच्या वा यो लिखेत् प्रस्थकं शुभे ! ।
तत्तदक्षरसंख्यानां स्वल्पायु र्याति वै दिने ॥
मानं वक्ष्ये पुस्तकस्य शृणु देवि ! समासतः ।
मासेनापि फलं विन्द्यादमाने श्री र्हता भवेत् ॥
हस्तमात्रमुष्टिमात्रमांवाद्य द्वादशाङ्गुलम् ।
दशाङ्गुलं तथाष्टौ च अतो हीनं न कारयेत् ॥

वेधद्वयं मुष्टिहस्ते बाहुमात्रे चिरन्तनम् ।
समभागे महेशानि ! हस्तादौ रूपबन्धकम् ॥
अष्टाङ्गुलं परित्यज्य मध्ये वेधं न कारयेत् ।
प्रादेशादौ भवेद्राजा द्व्यङ्गुले वा समाचरेत् ॥
पुस्तकस्य च आद्यन्ते यस्तु वेधं प्रकल्पयेत् ।
भार्य्याहानि र्भवेदाशु धनानां वा क्षयो भवेत् ॥
भूर्जे वा तेजपत्रे वा तथा वा तालपत्रके ।
विना गुरुञ्च देवेशि ! पुस्तकं कारयेत् प्रिये ! ॥
सम्भवे स्वर्णपात्रे च ताम्रपात्रे च शङ्करि ! ।
अन्ये वृक्षत्वचि देवि ! तथा केतकिपत्रके ॥
मृत्ताम्रपात्रे रौप्ये वा वटपत्रे वरानने ! ।
अन्यपत्रे वसुदले लिखित्वा यः समभ्यसेत् ॥
स दुर्गतिमवाप्नोति धनहानि र्भवेद्ध्रुवम् ।
देवस्य लिखनं कृत्वा यः पठेद् ब्रह्महा भवेत् ॥
पुस्तकं वा गृहे स्थाप्य वज्रपातो भवेद्ध्रुवम् ।
दग्धरन्ध्रे भवेत् पीड़ा वर्त्तुलं शुभदं भवेत् ॥
चतुष्कोणे विघ्नवस्तु त्रिकोणे मरणं भवेत् ।
सत्येऽक्षरे स्थितः शम्भुः शूलपाणिस्त्रिलोचनः ॥
प्रजापतिर्द्वापरे च त्रेतायां सूर्य्य एव च ।
कृते युगे पिनाकी च कलौ लिप्यक्षरे हरिः ॥
आरम्भे च समाप्तौ च लिखितं प्रतिपूजयेत् ।
हरिश्च गन्धपुष्पाद्यैर्वस्त्रैश्च सुमनोहरैः ॥
यावदक्षरसंख्यानं प्रतिपात्रे च शङ्करि ! ।
भवेद्युगसहस्राणि स्वर्गलोके वसेच्चिरम् ॥
वेतनञ्च न गृह्णीयात् लिखित्वा पुस्तकस्य च ।
यावदक्षरसंख्यानं तावच्च नरके वसेत् ॥

व्यञ्जनच्चितिमारूढ़ो वामनेत्रेन्दुसंयुतम्।
महावीजं विजानीयात् स जपेत् मुक्तिमाप्नुयात्॥
प्रणवे प्रणवं वच्ये वषड़न्ते च ठद्वयम्।
स्वयं वर्जेत् स्वरान्ते च नतिश्चैव हृदात्मिकाम्॥
आद्यमेव ग्रहस्थस्य प्रणवं सर्वमन्त्रके।
आद्यन्तवर्णसंस्थस्य आत्मज्ञानविवृद्धये॥
मन्त्रविद्याविभागे तु द्विविधं जायते प्रिये!।
मन्त्राः पुं देवताः प्रोक्ता विद्या स्त्रीदेवता स्मृता॥
पुंमन्त्रा हुं फड़न्ताः स्यु र्द्वि ठान्ताः स्युः स्त्रियो मताः।
नपुंसका नमोऽन्ताः स्युर्मनवश्च त्रिधा मताः॥
एतच्छ्रुत्या भवेद्विद्या महाशब्देन कीर्त्तिता।
परमेष्ठी ऋषिश्छन्दो गायत्र्याः समुदाहृतम्॥
देवता त्रिपुराख्याता सर्वार्थे विनियोजयेत्।
विधिना स्थापयेद्देवीं वारिणा प्रथमं प्रिये!॥
मुखप्रचालनं कृत्वा पुनः स्नानं समाचरेत्।
दिनद्वयान्तरे देवि! उत्थायाष्टदिनान्तरे॥
तैलेनोद्वर्त्तनं कुर्य्यात् कषायेणातिरूच्चयेत्।
पचान्ते चैव मासान्ते महास्नानं समाचरेत्॥
मूलवीजेन देवेशि! द्रव्यमन्त्रेण वा प्रिये!।
वैदिकेनाथ मन्त्रेण मायया वा समाचरेत्॥
कलसैः स्नापयेत् पश्चादर्घ्यस्नानमनन्तरम्।
अर्घ्यस्नानं ततः कृत्वा पुनः स्नानं करोति च॥
देवीलोकच्युति र्भवति धनहानिश्च जायते।
वारिणा प्रथमं स्नानं चीरेण तदनन्तरम्॥
दध्ना घृतं पिष्टद्वयं शर्कराञ्च गुड़ं मधु।
तिलचीरं दधितिलं मधुचीरेण स्नापयेत्॥

उष्णोदकं फलञ्चैव तथा चैव कुशोदकम् ।
गन्धोदकञ्च रत्नानामुदकं पुष्पतोयकम् ॥
बिल्वोदकं सप्तपत्रं रक्तपुष्पोदकं तथा ।
स्वर्णशङ्खोदकञ्चैव ताम्राधारमनन्तरम् ॥
घटोदकं कुशञ्चैव अर्घ्यं स्नानं समाचरेत् ।
पञ्चगव्येन यो देवीं तथा दुग्धकुशोदकैः ॥
स्नापयेद्विविधैर्मन्त्रैर्ब्रह्मस्नानं हि तत् स्मृतम् ।
कपिलापञ्चगव्येन तथा क्षीरयुतेन च ॥
स्नानं शतगुणं प्रोक्तं तथा इक्षुरसेन च ।
क्षीरेण स्नापयेद् यस्तु श्रद्धाभक्तिसमन्वितः ॥
कामाख्यां विधिवद्देवि ! इन्द्रलोके महीयते ।
घृताभ्यङ्गेन देवास्त्वष्टतेन विधिवत् प्रिये ! ॥
दश पूर्वान् दश परान् आत्मानञ्च विशेषतः ।
भवार्णवात् समुद्धृत्य दुर्गालोके महीयते ॥
स्नापयेद्विधिवद् यस्तु दध्ना दूर्वाक्षतेन च ।
राजतेन विमानेन शिवलोके महीयते ॥
कामाख्यां स्नापयेद् यस्तु नवेनेक्षुरसेन च ।
गरुड़ेन विमानेन विष्णुना सह मोदते ॥
स्नापयित्वा नरो दुर्गां गन्धचन्दनवारिणा ।
चन्द्रांशुनिर्मलः श्रीमान् चन्द्रलोके महीयते ॥
सुगन्धपुष्पतोयेन स्नापयित्वा नरः क्वचित् ।
नागलोकं समासाद्य क्रीड़ते सह पन्नगैः ॥
स्नापयित्वा तु कामेशीं श्रद्धया हेमवारिणा ।
सौवर्णयानमारूढ़ो मोदते वसुभिः सह ॥
द्रोणपत्र-बिल्वपत्र-करवीरोत्पलानि च ।
स्नानकाले प्रयोज्यानि देवीप्रीतिकराणि च ॥

एषामेकतमं स्नानं कृत्वा वै श्रद्धयान्वितः ।
भगवत्यै नरो भक्त्या विष्णुलोके महीयते ॥
स्नापयेद्यस्तु वै देवीं नरः कर्पूरवारिणा ।
स गच्छति परं स्थानं यत्र कामेश्वरी स्थिता ॥
पितॄनुद्दिश्य यो देवीं क्षीरेण मधुनाथवा ।
स्नापयेद्विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
तृप्ता भवन्ति पितरस्तस्य वर्षशतद्वयम् ।
पञ्चामृतस्य प्रत्येकं फलानाञ्च शतं शतम् ॥
शतञ्च वारिकुम्भानां महास्नाने नियोजयेत् ।
अपां कुम्भशतेनैव तैलस्यापि त्रिभिः पलैः ॥
महिष्ठन्तु महास्नानमेवमाहु र्मनीषिणः ।
मध्यमन्तु तदर्द्धेन स्नानं यत्र विधीयते ॥
तदर्द्धन्तु कनिष्ठं स्यादतो हीनं न कारयेत् ।
एवं यः कारयेत् स्नानं नरः कश्चित् कदाचन ॥
सप्तजन्मकृतात् पापात् तत्क्षणादेव हीयते ।
आयुर्बलं यशो वर्चः सौभाग्यं पुष्टिरेव च ॥
स्नापयित्वा तु कामाख्यां लभते नात्र संशयः ।
एवं यस्तु महास्नानं करोति भक्तिमान्नरः ॥
शरीरारोग्यमायुष्यं प्राप्नोति श्रियमुत्तमाम् ।
दशतोलिकमानेन द्रव्याणाञ्च पृथक् पृथक् ॥
चतुस्तोलिकया वाथ हीने स्नाने विधीयते ।
अष्टाङ्गुलं मुखं तस्य एकविंशाङ्गुलोदरम् ॥
अरत्निमात्रमुत्सेधं मणिकुम्भं तदुच्यते ।
गवाक्षमात्रे यत्रैषा सूर्य्यरश्मिस्तु लेखिका ॥
लेखिकाष्टौ भवेद्रूलो धूलिरष्टौ च सर्षपः ।
सर्षपाणां त्रयं [illegible] रक्तिरित्यभिधीयते ॥

रत्तिकानां विंशकन्तु पादकं परिकीर्त्तितम् ।
तोलिका च चतुष्पादैश्चतुस्तोलैः प्रसृतितः ॥
प्रसृतौ द्वे कर्षकञ्च द्वे कर्षे तु पलं भवेत् ।
पलार्द्धेन भवेन्मुक्तिर्द्वि मुक्ती गुड़कं मतम् ॥
एवं स्नानं ततः कृत्वा गात्रं सम्मार्जयेत् सुधीः ।
चन्दनेन सुगन्धेन कारयंस्तिलकं सुधीः ॥
कटिसूत्रञ्च वस्त्रञ्च यज्ञसूत्रं निवेदयेत् ।
मयूरपिच्छसङ्काशां स्निग्धचारुसुकेशिकाम् ॥
महतीं रक्तविम्बौष्ठीं रक्तनेत्रां सुवस्त्रिताम् ।
यच्च वै लोहितं चास्या सुरक्तकज्जलप्रभम् ॥
त्रिपुरेशि ! समाख्यातं त्रैलोक्यनिलयं परम् ।
मृत्तिकाया महेशानि ! लक्ष्मीकामो विभावयेत् ।
करालं यत्तु वै वक्त्रं कृष्णं दक्षिणगोचरम् ॥
कामाख्येति च विख्यातं दिव्यदंष्ट्रासमन्वितम् ।
सर्वसिद्धिप्रदञ्चैव सर्वार्थस्य च साधकम् ॥
देवस्य दक्षिणेनैव पीतवक्त्रेन चिन्तयेत् ।
कौवेरीनिलयं यच्च वदनं श्यामलं शिवम् ॥
शतवीताङ्गविज्ञेयमङ्गतं भुवनेश्वरि ! ।
अव्यक्तं रुचिरं दिव्यं कुब्जिकावदनोत्तमम् ॥
नरकेशेन सम्भक्तं ध्येयं विजयकाङ्क्षिभिः ।
शुद्धस्फटिकसङ्काशं सर्वरत्नसमन्वितम् ॥
सर्वज्ञानमयं ज्ञेयं कालवागीश्वरीमुखम् ।
सदा रङ्गेन भृङ्गेन निपीतं मधुसञ्चयम् ॥
ईशानं वदनं देव्याश्चिन्त्यं सर्वज्ञतार्थिभिः ।
सूर्य्यकोटिसहस्रांशु यद्वक्त्रमूर्द्धजं प्रिये ! ॥
पीठकामेश्वरी तद्वत् विज्ञेयं परमं महत् ।

परं ज्योतिर्मुखं भद्रे ! नरकेशेन चुम्बितम् ॥
भवपाशविनाशाय केवलं तद्धि भावयेत् ।
त्रिपुरा देवता चास्य कामाख्यस्य गणाम्बिके ! ।
एता मण्डलसंस्थाश्च देव्यः शक्तिसमन्विताः ॥
सिंहचर्मोत्तरासङ्गा कामाख्या विपुलोदरा ।
वैयाघ्रचर्मवसना सर्वसिद्धिप्रदा शुभा ॥
परमानन्दसम्भूता साट्टहासा महोत्सवा ।
सुनन्दा लोचनप्रीता व्यक्ताष्टादशलोचना ॥
चारुमाणिक्यसम्पूर्णकुण्डलद्वयशोभिता ।
भयङ्करी महेशानी रौद्री सर्वार्थदायिनीम् ॥
मुकुटकोटिशुभ्रांशुकमलज्योतिरन्विता ।
नानामणिगणाकीर्णकण्ठभूषणधारिणी ॥
मृणालकोमलैः स्निग्धा युक्ता द्वादशबाहुभिः ।
अस्थिरत्नार्चितैर्दिव्यैः पद्मकर्दमनालिभिः ॥
कर्त्तरीशवदम्भोलिसूत्रचक्रांशुभास्वरैः ।
षड्भिश्च बाहुभिर्धत्ते दक्षिणैर्बाहुभिः शृणु ॥
कोदण्डमुण्डखट्वाङ्गमृणालनालनीरजम् ।
कपालं पुस्तिकां घण्टां मुण्डमालानिवीतिनी ॥
तुलाकोटिपराक्रान्ता पादपद्मचयाश्रिता ।
सिंहासनोर्द्ध्वसंसुप्ता शवासनकृताश्रया ॥
मणिप्रभाविधानेन शिवेन परमेष्ठिना ।
नरकेशेन संश्लिष्टा कामाख्या परमेश्वरी ॥
एवं ध्यानं न्यसेद्देवि ! मातृकां परमेश्वरीम् ।
स्वनामग्रहनक्षत्रं श्रीकण्ठन्यासपूर्वकम् ॥
कलान्यासं पीठन्यासं मन्त्रन्यासं समाचरेत् ।
दशधा यन्त्रे संस्थाप्य संस्कृत्य च यथाविधि ॥

अक्षतान् विकिरेत्तत्र पीठपूजां समाचरेत् ।
पूर्वादिक्रमयोगेन गणेशञ्च गणाधिपम् ॥
गणनाथं गणक्रीड़ं गदी खग्राश्रयो मनुः ।
मन्वन्तरेण दीर्घेण तारयुक्तेन चार्चयेत् ।
क्रीड़ासरो दक्षिणे तु मन्दरं वामनेत्रकम् ॥
रश्मिविन्दुसमायुक्तं लोहजङ्घन्तु पश्चिमे ।
नारसिंहेन वीजेन क्षेत्रेशं परिपूजयेत् ॥
उत्तरे भूतनाथञ्च मन्दरेण समन्वितम् ।
गौरीपुत्रञ्च वटुकं तथा समयपुत्रकम् ॥
ज्ञानपुत्रं समयपुत्रं पूर्वादिषु यथाक्रमात् ।
हंसेत्यनेन मन्त्रेण ध्यात्वा रक्तेन चार्चयेत् ॥
शान्तिकानां द्वारपालं तथा विन्दुकला परा ।
निवृत्तिश्च कला पश्चात् प्रतिष्ठा च कला ततः ।
मायावीजेन पूर्वादि तत्र वै हेतुकादिकम् ॥
हेतुकं त्रिपुरघ्नञ्च अग्निवेतालकं तथा ।
वायव्यादिक्रमेणैव कालञ्चैव करालकम् ॥
एकपादं तथा भीमं चतुर्णां गगनो मनुः ।
असिताङ्गादयश्चैव ब्राह्म्यादिसिद्धिसंयुताः ॥
चर्चिकं दशकं पूज्यात् षट्कोणेषु भगादितः ।
षट्कोणाग्रे च मदनं रतिपुत्रीं स्वपार्श्वयोः ॥
पञ्चवाणांस्तथा चाग्रे ग्रहांश्चैव तु दिक्पतीन् ।
आसनं पूजयित्वा च उपर्य्युपरिभावतः ॥
ध्यात्वा चारोपयेद्देवीमिमं मन्त्रमुदाहरेत् ।
एह्येहि परमेशानि ! सान्निध्यमिह मण्डले ॥
कुरुष्व जगतां मातः ! संसारार्णवतारिणि ! ।
महापद्मवनान्तस्थे ! कारणानन्दविग्रहे ! ॥

शब्दब्रह्ममये ! स्वच्छे ! कामेश्वरि ! प्रसीद मे ।
कामेश्यावाहनं कुर्य्यादिति मन्त्रेण शङ्करि ! ॥
नमो भवाय सर्वाय रुद्राय वरदाय च ।
पशूनां पतये चैव सर्वानन्दात्मने सदा ॥
त्रिजटाय त्रिशीर्षाय सदा त्रिशूलधारिणे ।
त्रिनेत्राय त्रिकालाय त्रिपुरघ्नाय वै नमः ॥
नमश्चण्डाय मुण्डाय विश्वदण्डधराय च ।
लोहिताय च धूम्राय नीलकण्ठाय वै नमः ॥
नमस्त्रिपुररूपाय विरूपाय नमो नमः ।
सूर्य्याय सूर्य्यपतये सिद्धिनाथाय वै नमः ॥
तस्मादरण्योत्तरतो नातिदूरे व्यवस्थितः ।
सर्वं श्वेतं कृष्णवर्णं गोधिकायाः शिला यतः ॥
पश्चिमे तु शिवस्तस्य पूर्वपूर्वं विजानीहि ।
गयातीर्थञ्च उदरे उत्तरे परिकीर्त्तितम् ॥
चतुर्वर्गप्रमाणेन शीर्षे चैव गयाशिरः ।
शीर्षपार्श्वे रामगया रामपिण्डन्तु दक्षिणे ॥
पुच्छे तु मानसं तीर्थं दक्षिणे तु महानदी ।
तत्र स्नानं प्रकुर्वीत विधिपूर्वेण कर्मणा ॥
तस्योत्तरे इषुक्षेपयुगस्यैवान्तरे प्रिये ! ।
तीर्थं प्रेतशिलाख्यञ्च श्राद्धी स्वर्गं नयेत् पितॄन् ॥
महानद्यां कृते श्राद्धे अक्षय्यं फलमाप्नुयात् ।
तथाक्षयवटे श्राद्धी ब्रह्मलोकं नयेत् पितॄन् ॥
गयातीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।
आत्मयोने ! महेशानि ! गयायान्तु तिलैर्विना ॥
पिण्डनिर्वपणं शेषमपि कुर्य्याच्च मानवः ।
पश्चिमे वासुदेवस्य धनुरष्टादशान्तरे ॥

दीर्घाकारं पञ्चकोणमुत्तरं मुनिसंस्तुतम् ।
उत्तरे मानसे श्राद्धी न भूयो जायते नरः ॥
दक्षिणे कोटिलिङ्गस्य चतुष्कोणश्च यः शिवः ।
दक्षिणं मानसं तद्धि सर्वपापप्रणाशनम् ॥
दक्षिणे मानसे श्राद्धी ब्रह्मलोकं नयेत् पितॄन् ।
मन्दाकिन्यां कृते श्राद्धे ब्रह्मलोकं नयेत् पितॄन् ॥
श्राद्धी रामह्रदे देवि ब्रह्मलोकं नयेत् पितॄन् ।
गयाशिरे पिण्डदानात् गयापुच्छे तथोत्तरे ॥
त्रिदिनं पातयेत् पिण्डं कुलञ्चैव समुद्धरेत् ।
काङ्क्षन्ति पितरः पुत्रान् नरकाद्भयभीरवः ॥
गयां गच्छति यः कश्चित् सोऽस्मान् सन्तारयिष्यति ।
पश्चिमे कामनाथस्य सप्तधन्वन्तरे स्थिता ॥
दृष्ट्वा दीर्घेश्वरीं देवीं सर्वकामफलप्रदाम् ।
षष्टिवर्षसहस्राणि देववद्भुवि मोदते ॥
मायाबीजेन देवेशि ! अष्टम्यां प्रतिपूजयेत् ।
सर्वविद्यामवाप्नोति राज्ञीनामग्रणीर्भवेत् ॥
कल्पवृक्षं ततो गत्वा तिन्तिड़ीसंज्ञकं तरुम् ।
प्रदक्षिणत्रयं कृत्वा मन्त्रेणानेन पूजयेत् ॥
ॐ नमो व्यक्तरूपाय सर्वदेवस्तुताय च ।
शिवाधिष्ठानरूपाय तिन्तिड़ीवृक्षरूपिणे ॥
प्रशस्तः सर्वमन्त्रेषु काम्ये मोक्षे च दक्षिणे ।
वामहस्तस्य संस्पर्शे मालाया ग्रहणे तथा ॥
भूगतश्च परैः स्पृष्टश्छिन्ने संवत्सरान्तरे ।
संस्कुर्य्यात् मालिकां देवि ! ताम्रपात्रे निवेशयेत् ॥
गायत्र्या प्रथमं प्रोक्ष्य पञ्चगव्यैरनन्तरम् ।
पश्चात्तेनैव मन्त्रेण ह्रुं सिद्ध्यै नम इत्युत ॥

गन्धोदकेन तत्पश्चात् गन्धपुष्पैः पृथग्विधैः।
कुम्भत्रयेण संस्थाप्य रक्तपुष्पैः प्रपूजयेत्॥
यवक्षीरबलिं दत्त्वा देवप्राणं निवेशयेत्।
तदानीय स्पृशेन्मालामन्तरीक्षेषु विन्यसेत्॥
आनीय रात्रौ पीठे च स्थापयेन्मालिकां ततः।
गन्धचन्दनकं दत्त्वा तथा दूर्वाक्षतानि च॥
पुनर्देवस्य पीठे च तद्रात्रौ च निवेशयेत्।
शतं साहस्रकञ्चैव अयुतं नियुतं तथा॥
लक्षञ्चैव तथा कोटिं जपहोमस्य मानकम्।
प्रतिमाने चाष्टहस्तं सर्वपर्वणि सञ्जपेत्॥
अथवा चाष्टभिर्बीजैस्त्रोणि तत्रापि योजयेत्।
माले! माले! महामाले! सर्वत्रैव स्वरूपिणि!॥
चतुर्वर्गस्त्वयि न्यस्तस्तन्माले! सिद्धिदा भव।
पुष्करी सखिबीजं त्वं सूक्ष्मं सूक्ष्मान्वितं तथा॥
आकाशशशिसंयुक्तं सिद्धेश हृदयसंज्ञकम्।
एष पञ्चाक्षरो मन्त्रो मालायाः परिकीर्त्तितः॥
ग्रहणे स्थापने चैव पूजने विनियोजयेत्।
जपादौ शिवं विन्यस्य जपान्ते तु स्तुतिं पठेत्॥
बलिदानं ततः कुर्य्यात् दद्याद्विभवमात्मनः।
अनुलोमविलोमेन मूलमन्त्रेण पूजयेत्॥
अम्बे! अम्बिके! मन्त्रेण तथा पौराणिकेन च।
जयकामेशि! चामुण्डे! जय भूतापहारिणि!॥
जय सर्वगते! देवि! कामेश्वरि! नमोऽस्तु ते।
विश्वमूर्त्ते! शुभे! शुद्धे! विरूपाक्षि! त्रिलोचने!।
भीमरूपे! शिवे! विद्ये! कामेश्वरि! नमोऽस्तु ते॥
मालाजये! जये! जम्भे! भूताक्षि! क्षुधितेऽक्षये!।

महामाये ! महेशानि ! कामेश्वरि ! नमोऽस्तु ते ॥
भीमाक्षि ! भीमदे ! देवि ! सर्वभूतक्षयङ्करि ! ।
करालि ! विकरालि ! च कामेश्वरि ! नमोऽस्तु ते ॥
कालि ! करालि ! विक्रान्ते ! कामेश्वरि ! हरप्रिये ! ।
सर्वशस्त्रभूते ! देवि ! कामेश्वरि ! नमोऽस्तु ते ॥
कामरूपप्रदीपा च नीलकूटनिवासिनी ।
निशुम्भशुम्भमथनि ! कामेश्वरि ! नमोऽस्तु ते॥
कामाख्ये ! कामरूपस्थे ! कामेश्वरि ! हरप्रिये ! ।
कामिनि ! देहि मे नित्यं कामेश्वरि ! नमोऽस्तु ते ॥
रुधिरासवपानाढ्यवक्त्रे ! त्रिभुवनेश्वरि ! ।
महिषासुरवधे देवि ! कामेश्वरि ! नमोऽस्तु ते ॥
छागतुष्टे ! महाभीमे ! कामाख्ये ! सुरवन्दिते ! ।
जय कामप्रदे ! तुष्टे ! कामेश्वरि ! नमोऽस्तु ते ॥
भ्रष्टराज्यो यदि राजा नवम्यां नियतः शुचिः ।
अष्टम्याञ्च चतुर्दश्यां उपवासी नरोत्तमः ॥
संवत्सरेण लभते राज्यं निष्कण्टकं पुनः ।
य इदं शृणुयाद्भक्त्या तव देवि ! समुद्भवम् ॥
सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति ।

कामेश्वरि ! देवि ! सुरासुरप्रभे !
प्रकाशिताम्भोजनियन्त्रिते ! नमः ।
सुरारिब्रह्मस्थलपाटवोत्सुके !
त्रयीमयि ! देवि ! च ते नमामि ॥

सितासिते ! रक्तपिशङ्गविग्रहे ! रूपाणि यस्याः प्रतिपादितानि ।
करे कपाले च विकल्पितानि शुभाशुभानामपि तां नमामि ॥
कामरूपसमुद्भूते ! कामपीठावतंसके ! ।
विश्वाधार ! महामाये ! कामेश्वरि ! नमोऽस्तु ते ॥

अव्यक्तविग्रहे ! आन्ते ! सन्तते ! कामरूपिणि ! ।
कालगम्ये ! परे ! शान्ते ! कामेश्वरि ! नमोऽस्तु ते ॥
या सुषुम्नान्तरालस्था चिन्त्यते ज्योतीरूपिणी ।
प्रणतोऽस्मि परां वीरां कामेश्वरि ! नमोऽस्तु ते ॥
दंष्ट्राकरालवदने ! मुण्डमालोपशोभिते ! ।
सर्वतः सर्वगे ! देवि ! कामेश्वरि ! नमोऽस्तु ते ॥
स्नानकाले च प्रत्यूषे भोजने दन्तधावने ।
तथा विगतवस्त्रे च दर्शनं न तु संस्पृशेत् ॥
मधुमासे त्रयोदश्यां चतुर्दश्यां वृषस्य च ।
न स्त्रीदेवीं स्पृशेज्जातु तद्दिने दर्शनं त्यजेत् ॥
दर्शनं भयदं विन्द्यात् शापः पतति मूर्द्धनि ।
आशु ज्येष्ठसिताष्टम्यां कुमारी नावलोकयेत् ॥
कुमारीभिः सुरूपादिः साधकोऽपि कदाचन ।
न रात्रौ संस्पृशेन्नारीं बलिं न स्पर्शयेत् क्वचित् ॥
लिङ्गस्थाञ्च महादेवीं कदाचिदपि न व्रजेत् ।
विप्राणां क्षीरबलयः शाल्यन्नं वाथ पायसम् ॥
घृतप्लुतं चर्व्यफलं पुष्पं तस्य घृतान्वितम् ।
दद्यात् क्षीरञ्च दुग्धान्नं भक्तान्नं वा निवेदयेत् ॥
शाल्यन्नं वाथ समधु कृषरं खण्डमोदकम् ।
राज्ञां हि पशवः शस्ता वैश्यानां व्रीहयस्तथा ॥
क्षौद्रं वृषलजातीनां सर्वेषां पशवोऽथवा ।
निवेदयेत् शोणतुण्डं मानुषं वा लुलापकम् ॥
वराहं वाथ च्छगलं चामरं वरुणं तथा ।
मेषञ्चाथ वराहञ्च गोधिकाञ्च निवेदयेत् ॥
चामराणाञ्च दशकं छागलैवं विशिष्यते ।
दशभिश्छगलैरेव कूर्म एकः प्रशस्यते ॥

कूर्मस्य च शतेनापि शशकैकं विशिष्यते ।
शशकस्य सहस्राणां वराहस्तु विशिष्यते ॥
द्वे सहस्रे वराहस्य माहिषं श्रेष्ठमुच्यते ।
द्वे सहस्रे लुलापस्य खड्गमेकं विशिष्यते ॥
खड्गिनान्तु सहस्रेण मानुषं चातुलं फलम् ।
द्वे सहस्रे मानुषस्य शोणतुण्डं प्रशस्यते ॥
द्वे शते शोणतुण्डस्य श्वेतग्रीवं प्रशस्यते ।
श्वेतग्रीवशतेनापि गोधिकापि वरं मतम् ॥
गोधिकानां शतं देवि ! नरस्य च कुमारकम् ।
पशूनांश्चैव षण्मासात् परतश्च बलिर्भवेत् ॥
छगलं कृष्णं श्वेतं वा द्विवर्षात् परतो यदि ।
सज्जाति गुग्गुलुशुद्धे शोणाख्यंजम्बूकं तथा ॥
तथा गन्धमृगञ्चैव छागञ्च पर्वतीयकम् ।
मूषकञ्च करालञ्च चुद्रमार्जारमेव च ॥
काकोलं कालविङ्कञ्च राजहंसञ्च शारिकम् ।
मूकं गृध्रञ्च काकोलं मयूरं चित्रकं तथा ॥
अश्वञ्च वेणुपृष्ठञ्च कृष्णपारावतं तथा ।
बृहत्कपोतकञ्चैव खञ्जरीटन्तथैव च ॥
वकञ्चैव बलाकञ्च प्रयत्नेन विवर्जयेत् ।
संहृते बलिदानेन स्त्रियन्तु न विचारयेत् ॥
मिथुने दीयमाने तु न दोषो जायते प्रिये ! ।
श्मशाने महिषं दद्याद्देवकस्य च सन्निधौ ॥
स याति ब्रह्मलोकञ्च शिववद्भुवि मोदते ।
अन्तर्गृहमृतानाञ्च स याति ब्रह्म शाश्वतम् ॥
अद्यापि दृश्यते ब्रह्म यस्तु दक्षिणतः प्रिये ! ।
पतते नात्र सन्देहो ज्ञानदाता सदाशिवः ॥

तस्माद्दक्षिणकर्णेन भूमौ पतति वै नरः।
महापातकयुक्तोऽपि युक्तो वाप्युपपातकैः॥
श्मशाने बलिदाने तु मुक्तो गच्छेत् शिवालयम्।
अकामो वा सकामो वा प्राणांस्त्यजति तत्र वै॥
त्यक्तदेशोऽपि भजति स्वयमेव गणेश्वरः।
परदेशार्जितं वाथ कृत्वा दत्त्वा बलिं नृपः॥
महापातकिनं चौरं मूर्खं वा चैकवीरकम्।
स्त्रीजितं वा ब्रह्मद्विषं प्रयत्नेन न योजयेत्॥
मणिमुक्तासुवर्णानां देवि दत्तानि यानि च।
न निर्माल्यं द्वादशाहं ताम्रपात्रं तथैव च॥
पट्टी शाटौ च षण्मासं नैवेद्यं दत्तमात्रतः।
मोदकं कृषरञ्चैव यामार्द्धेन महेश्वरि!॥
पट्टवस्त्रं त्रिमासाच्च यज्ञसूत्रमहः स्मृतम्।
यावदुष्णं भवेदन्नं परमान्नं तथैव च॥
मस्तकं रुधिरञ्चैव अर्द्धरात्रेण पार्वति!।
मुहूर्त्तं दधि दुग्धञ्च आज्यं यामेन शङ्करि!॥
करवीरमहोरात्रं विल्वपत्रं तथैव च।
जवा बन्धूकमाल्यञ्च निर्माल्यं सार्द्धमासके॥
माल्यं वै करवीरस्य पद्मस्य विल्वकस्य च।
मासार्द्धेन महेशानि! ताम्बूलं दत्तमात्रतः॥
खर्जूरं पनसं द्राक्षा मातुलुङ्गञ्च शावकम्।
कदली नागरङ्गञ्च तथा जम्बूफलानि च॥
शालूकं मधुकञ्चैव प्रयत्नेन निवेदयेत्।
फलं विल्वञ्च दाड़िम्बं जयन्तीं कर्कटीं तथा॥
त्रपुरञ्चैव वार्त्ताकीं देवीप्रीतिकराणि च।
न निर्माल्यञ्च दाड़िम्बं तथा विल्वफलं प्रिये!॥

सौगन्धिकञ्च कदलं प्रयत्नेन नियोजयेत् ।
कदलं वीजपूरञ्च दुग्धं पक्वं निवेदयेत् ॥
कन्दु पक्वं कशेरुञ्च जम्बू बालाप्रियं भवेत् ।
आर्द्रकं लवणञ्चैव जीवकं पिप्पलीयकम् ॥
जातीकोषं तिन्दुकञ्च देव्याः प्रियतरं महत् ।
रामरम्भाफलं पुष्पं वदनं धूम्रतापितम् ॥
न योजयेन्महादेव्यै उत्पलस्य च वीजकम् ।
धान्यं श्रावणकं मर्त्त्यो द्विःस्विन्नञ्च विवर्जयेत् ॥
नारिकेलं सुवर्णाभं नारिकेलञ्च वामकम् ।
निवेदयेन्महादेव्यै तोयं तस्य विशेषतः ॥
नारिकेलञ्च भाण्डीरं दैवे श्राद्धे विवर्जयेत् ।
वकुलस्य फलं पक्वं पद्मस्य च फलं तथा ॥
नियोजयेन्महादेव्यै चान्द्रायणफलं लभेत् ।
शृणु देवि ! प्रवक्ष्यामि पुष्पाध्यायं समासतः ॥
ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिपुष्पकैः ।
सितरक्तैस्तथा पुष्पैर्नीलपद्मस्य पाण्डरैः ॥
किंशुकैस्तगरैश्चैव जवाकनकचम्पकैः ।
किंशुकैस्तगरैश्चैव वकुलैश्चैव मन्दरैः ॥
धुस्तूरकादियुक्तैश्च वन्धूकागस्त्यसम्भवैः ॥
मदनैः सिन्धुवारैश्च दूर्वाङ्कुरसुकोमलैः ।
करवीरस्य माघ्यस्य सहस्राणि ददाति यः ।
स कामान् प्राप्य चाभीष्टान् देवीलोके महीयते ॥
एकेन करवीरेण पद्मानां द्वे सहस्रके ।
नोत्सृज्य दद्यात् पुष्पाणि वनस्थानि कदाचन ॥
न शक्नुवन्ति वै देवाः समाकर्षितुमुद्यताः ।
एकैकं कुसुमं यच्चा रक्षन्ति दश वै यतः ॥

तथा यज्ञाङ्गनाः पञ्च सर्वतः सुसमाहृताः ।
तस्मादाहृत्य कुसुमं दद्याद्देवान् पितॄनपि ॥
कुर्य्यात् पुष्पगृहं तत्र कामाख्योपरि शङ्करि ! ।
इह कामानवाप्नोति दुर्गालोके महीयते ॥
करवीरेण जात्या च पूजयेद् यस्तु शङ्करि ! ।
अग्निष्टोमफलं लब्ध्वा सूर्य्यलोके महीयते ॥
पूजयित्वा नरो भक्त्या चण्डिकां पद्ममालया ।
ज्योतिष्टोमफलं प्राप्य सूर्य्यलोके महीयते ॥
सजातिवकपुष्पेण तथा रुद्रजटस्य च ।
राजंपेयस्य यज्ञस्य फलं प्राप्नोति नान्यथा ॥
सर्वेषामेव पुष्पाणां प्रवरं नीलमुत्पलम् ।
नीलोत्पलसहस्रेण यस्तु मालां प्रयच्छति ॥
दुर्गायां विधिवद्देवि ! तस्य पुण्यफलं शृणु ।
वर्षकोटिसहस्राणि वर्षकोटिशतानि च ॥
देव्या अनुचरो भूत्वा रुद्रलोके महीयते ।
वक्रधान्योद्भवं यच्च सूक्ष्मधान्योद्भवं तथा ॥
राजधान्योद्भवञ्चैव रक्तधान्योद्भवं तथा ।
शस्तं तण्डुलमक्षुस्सं सप्ताष्टनवसंख्यया ॥
दूर्वाङ्कुरसमेतञ्च भगवत्यै निवेदयेत् ।
अष्टम्यां वा नवम्यां वा सोऽश्वमेधफलं लभेत् ॥
गन्धानुलेपनं दत्त्वा ज्योतिष्टोमफलं लभेत् ।
कुङ्कुमेन विलिप्याघ्यं गोसहस्रफलं लभेत् ॥
चन्दनागुरुकर्पूरैः शुक्लपुष्पैः सकुङ्कुमैः ।
विलिप्तां पूजयेद्दुर्गां वह्निष्टोमफलं लभेत् ॥
निम्बपत्रञ्च माध्यञ्च तमालामलकीदलम् ।
कह्लारं तुलसीञ्चैव पद्मञ्च श्रेष्ठपुष्पकम् ॥

एतत् पर्य्युषितं न स्याद् यच्चान्यत् कलिकात्मकम् ।
न दुष्येत् छिन्नभिन्नञ्च जातीपुष्पञ्च शङ्करि ! ॥
पद्मदूर्वाङ्कुरञ्चैव तुलसीदलमेव च ।
नाशु पर्य्युषितं न स्यात् कुसुमस्य च शङ्करि ! ॥
नार्चयेत् झिण्टिपुष्पेण पीतञ्च तगरं तथा ।
श्वेतोड्रेण च कृष्णेन विजयेन न चार्चयेत् ॥
त्रिलक्षं प्रजपेन्मन्त्रं पुरश्चरणसिद्धये ।
न्यासञ्च तर्पणञ्चैव होमं पङ्क्त्यष्टकञ्चरेत् ॥
जितेन्द्रियो महेशानि ! सोऽग्निष्टोमफलं लभेत् ।
शुक्लपक्षे नवम्यान्तु अष्टम्यां परमेश्वरीम् ॥
त्रिकालं पूजयेद्यस्तु चतुर्दश्यां मम प्रिये ! ।
स गच्छति परं स्थानं यत्र देवी व्यवस्थिता ॥
क्रीड़यित्वा चिरं कालं राजा भवति भूतले ।
स्नात्वोपवासनियमपूजाजागरमार्जनैः ॥
सर्वकालेषु सर्वेषु कामेशीं यस्तु पूजयेत् ।
विमानवरमारुह्य ध्वजमालाकुलं तथा ॥
ब्रह्मलोके नरो याति मोदते शाश्वतीः समाः ।
विविधै र्भक्तिभावेन तस्माद् विभवविस्तरैः ॥
पूजयेत् सततं दुर्गां महापुण्यफलेच्छया ।
अयने विषुवे चैव षड़शीतिमुखे प्रिये ! ॥
मासैश्चतुर्भिर्यत् पुण्यं विधिना पूज्य चण्डिकाम् ।
तत् फलं लभते देवी नवम्यां कार्त्तिकस्य च ॥
मासि चाश्वयुजे देवीं शुक्लपक्षे महेश्वरीम् ।
नवम्यां पूजयेद्यस्तु तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
तत् फलं समवाप्नोति नात्र किञ्चित् प्रपद्यते ॥

हनूमतश्चोत्तरे च एकविंशधनुर्मितम् ।
मुक्तिमण्डपिकं नाम स्थानं परमदुर्लभम् ॥
संस्थितां प्रजपेत्तत्र परां गतिमवाप्नुयात् ।
ततः कृताञ्जलिर्मुद्रां कृत्वा देवीं प्रसादयेत् ॥
नमस्ते सर्वदेवेशि ! भक्तानां भयहारिणि ! ।
संसारसागरे मग्नं त्राहि मां परमेश्वरि ! ॥
एवं प्रसाद्य तां देवीं दण्डवत् प्रणिपत्य च ।
ततोऽर्चयेद्गुरुं भक्त्या पुष्पगन्धानुलेपनैः ॥
कुमारीं भोजयेत्तत्र जागरं कारयेन्निशि ।
माहात्म्यञ्च महादेव्या गीतिकाश्चापि कारयेत् ॥
ध्यायन् स्तुवन् परां देवीं प्रेरयेद्रजनीं बुधः ।
मासि मासि तथाष्टम्यां चतुर्दश्यां विशेषतः ॥
गोधूलिसमये देवि ! नयेत् कामेश्वरालयम् ।
रथे वा शिविकायां वा दृष्ट्वा तत्र कदाचन ॥
सर्वपापविनिर्मुक्तो देवीलोके महीयते ।
मुक्तिमण्डपिकां नीत्वा पूजयेद्यस्तु शङ्करीम् ॥
दशाश्वमेधे यत् पुण्यं लभते नात्र संशयः ।
न कुर्य्याद्दिवसे यात्रां न च रात्रौ महानिशि ॥
शरत्कालस्य सप्तम्यां नयेन्नगरदक्षिणे ।
सायंकाले महेशानि ! सर्वयज्ञफलं लभेत् ॥
अष्टम्यां पूजयित्वा च नवम्यां स्रोतसो जले ।
यश्चैव स्नापयेद्देवीं दिवसे च न दुष्यति ॥
ततः स्पृष्ट्वा रथे देवीं न शोको जायते भुवि ।
स्कन्धे देवीं वहेद्यस्तु अश्वमेधं पदे पदे ॥
तस्मात् प्रयत्नतो भूत्वा शिविकां कारयेद् बृहत् ।
एतस्मिन्नन्तरे देव्याः स्नानार्थं पर्वतं तथा ॥

पश्येत् कामेश्वरं देवं भूमिपीठे व्यवस्थितम् ।
तस्योत्तरे कामसरो भानुहस्तप्रमाणतः ॥
तत्र कामासनं जप्त्वा स्नात्वा कामानवाप्नुयात् ।
कामकुण्डे नरः स्नात्वा यः पश्येत् काममीश्वरम् ॥
न तस्य पुनरावृत्तीरुद्रलोके महीयते ।
चतुर्भुजं शूलहस्तं खट्वाङ्गञ्च वराभयम् ॥
पद्मस्थं पूजयेद्देवं सर्वपापप्रणाशनम् ।
दक्षिणामूर्त्तिमन्त्रेण पूरयेच्च प्रसादयेत् ॥

ओं नमः शिवाय तन्निशामयाय नमः शिवाय शिवार्चिताय तुभ्यं कृपापराय नमो मायागेहे नाश्रमाय नमोऽस्तु शोषाय महान्धकाय नमः। शरण्याय नमो गणाय नमोऽस्तु भीमगणानुगाय नमोऽस्तु नानाभुवनादिकर्त्रे ।

स्नापयित्वा घृतक्षौद्रैर्गन्धैर्दीपैश्च पूजयेत् ॥
कनकैर्विल्वपत्रैश्च रक्तरुद्रजटैरपि ।
जयशब्दैः स्तवैश्चैव नानानैवेद्यवेदनैः ॥
चैत्रे मासि त्रयोदश्यां शुक्लायां काममीश्वरम् ।
ये पश्यन्ति सुरश्रेष्ठं ते यान्ति परमं पदम् ।
अष्टम्याञ्च निशाभागे नयेत् कामेश्वरीगृहम् ॥
तत्र सम्पूजयेद्देवं देव्या सह विशेषतः ।
अग्निष्टोमफलं तस्मात् लभते नात्र संशयः ॥
दर्शनात् फलमाप्नोति दृष्ट्वा कामेश्वरीं ततः ।
यद् यत् प्रार्थयते तत्र तत्तदेव न संशयः ॥
कम्बलस्य च यामे तु देवी यत्रास्ति सङ्गता ।
धनुरष्टान्तरे भद्रे ! यजेत् कोटीश्वरीं पराम् ॥
दृष्ट्वा च न स्पृशेद्देवीं पुत्रार्थी न कदाचन ।
सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ॥

# अथ अष्टमः पटलः ।

श्रीभगवानुवाच ।

ततोऽस्मिन् दिवसे देवि ! प्रायादाकाशवाहिनीम् ।
लोकचक्षुरिति ख्याता सर्वपापहरा शुभा ॥
देव्या दक्षिणतश्चैव इषुक्षेपद्वयान्तरे ।
त्रिधारा दृश्यते तत्र मध्यधारा सरस्वती ।
दक्षिणे वरुणा धारा उत्तरे यमुना स्मृता ।
यामुने च कृतस्नानो मुच्यते घोरकिल्विषात् ॥
सरस्वत्यां कृतस्नानो विष्णुलोके महीयते ।
वरुणायां कृतस्नानो मुक्तिमाप्नोत्यनुत्तमाम् ॥
त्रिधारासङ्गमो यत्र अनन्तः परिदृश्यते ।
आकाशगङ्गा सा देवी महापातकनाशिनी ॥
नमो देवि ! सहस्राक्षे ! भवबन्धप्रणाशिनि ! ।
नीलशैलस्थिते ! भद्रे ! पापं मे हर जाह्नवि ! ॥
अनेन स्नानं कृत्वा तु शब्दबीजेन पूजयेत् ।
तस्याः कौवेरदिग्भागे नातिदूरे व्यवस्थितः ॥
शुक्लाकृतिश्चारुरूपो वासुदेवः प्रकीर्त्तितः ।
स्मरेण पूजयेल्लिङ्गं गन्धाद्यैः पायसैरपि ॥
द्वादश्यां कार्त्तिके मासि दृष्ट्वा मुक्तिञ्च विन्दति ।
रात्रौ जागरणादत्र मुच्यते सर्वपातकात् ॥
दक्षिणे चैव गङ्गायाश्चरधन्वन्तरिः स्थितः ।
महाश्मशाने भगवान् क्रीड़ते स्त्रीगणैः सह ॥
तत्र देवाः सगन्धर्वा ऋषयः सहचारणाः ।
प्रसादनार्थं देवस्य नित्यमायान्ति चादृताः ।
तत्राराध्य महादेवं भावपूते गणेश्वरम् ।

प्राप्तवान् गाणपत्यं हि देवानामपि दुर्लभम् ॥
अद्यापि दृश्यते तत्र प्रत्यहं महदद्भुतम् ।
निक्षिप्य मानुषास्थीनि भस्मीभूय प्रजापतिः ॥
तत्र गत्वा महादेवं यः पूजयति मानवः ।
दिव्यलोकमवाप्नोति भिन्नदेहो न संशयः ॥
कार्त्तिके मासि शुक्लायां चतुर्दश्यां विशेषतः ।
सम्पूज्य तत्र देवेशं सर्वप्रीतं पितामहम् ॥
तावत् प्रीत्या तु सर्वांस्तान् रुद्रस्यानुचरो भवेत् ।
वंशश्च दृश्यते तत्र उत्तराङ्गं हरं श्रुतम् ॥
पश्चिमाङ्गं हेरुकञ्च विष्णुरूपिणमव्ययम् ।
भैरवी दक्षिणांशश्च त्रिपुरेत्यभिधीयते ॥
प्रासादेन तु मन्त्रेण पूजयेत् परमेश्वरम् ।
वाजिमेधस्य यज्ञस्य लभते फलमुत्तमम् ॥
कुलाद्येन त्रिकुण्डेन पूजयेद्भक्तिमान्नरः ।
महाविद्यामवाप्नोति मण्डलान्नात्र संशयः ॥
हेरुकं द्वादशार्णेन वासुदेवस्वरूपिणम् ।
सर्वलोकेश्वरो याति जातिश्रेष्ठोऽभिजायते ॥
रुधिरैर्मांसमद्यैश्च पूजयेत् परमेश्वरीम् ।
रजन्यां सम्प्रदद्यात्तु कूर्ममांसं कदाच न ॥
चामरं मद्गुरं मत्स्यं प्रयत्नेन विवर्जयेत् ।
चिञ्चां भुक्त्वा नीलश्चैवं श्मशानं वा प्रमादतः ॥
महाभयङ्करं विन्द्यात् स्पृष्ट्वा शापं प्रयच्छति ।
न स्पृशेत् सप्तरात्रञ्च स्नानं वामहृदि प्रिये ! ॥
चान्द्रायणत्रयं कृत्वा ततः शुद्धिर्भविष्यति ।
राजीवं रजनीञ्चैव शाकं चामरसम्भवम् ।
भुक्त्वा प्रमादतो देवि ! तदेवं द्रुतमाकिरेत् ॥

कर्कन्धूशर्करायुक्तं दण्डशाकं तथैव च ।
कूष्माण्डं पर्वतीयञ्च दूरतः परिवर्जयेत् ॥
अष्टम्याञ्च नवम्याञ्च त्रयोदश्यां विशेषतः ।
एकविंशतिसूत्रैश्च तथा त्रिगुणितेन च ॥
त्रिगुणेत्येकयोगेन पदे तु त्रिंशकं मतम् ।
कोषतः पट्टसूत्रस्य अभावे रक्तकं न्यसेत् ॥
अन्यत्र दर्शयेन्मालां न स्पृशेद्वामपाणिना ।
वानप्रस्थो यतिश्चैव ब्रह्मचारी तथा प्रिये ! ॥
विष्णुमन्त्रस्य जाप्ये तु समन्त्रस्यापि च प्रिये ! ।
वामहस्ते ततो धृत्वा सप्तवीजान्तरं प्रिये ! ॥
सञ्जपेद्दक्षिणेनैव प्रतिवीजं वरानने ! ।
गृहद्वारि समागम्य तिन्तिड़ीकाय वै नमः ॥
सहस्रान्मुच्यते पापात् जीर्णत्वच इवोरगः ।
कामेश्वरस्य पृष्ठे तु यावत् सिद्धेश्वरः स्थितः ॥
तदन्तर्गतखण्डे च छायारुद्रः प्रकीर्त्तितः ।
स्थानं देहिपरित्यागश्छाया चात्र विधीयते ॥
यः करोति वृषोत्सर्गं तस्मिन् क्षेत्रे वरानने ! ।
अग्निष्टोमशतं पुण्यं लभते नात्र संशयः ॥
माघे मासि महेशानि ! छायारुद्रे तिलैर्विना ।
पिण्डनिर्वपणं कृत्वा मातृणामनृणो भवेत् ॥
ततो विन्ध्याचलं गत्वा कृष्णा रक्ता च या शिला ।
विन्ध्येशी सा समाख्याता श्यजेत् कमलादिना ॥
कामेश्वर्य्याश्च मन्त्रेण सा पूज्या परमेश्वरी ।
गवामयुतदानेन यत् फलं यत्र पार्वति ! ॥
तत् फलं लभते सत्यं विन्ध्येशीदर्शनेन च ।
तस्याः पूर्वोत्तरे देशे इषुक्षेपशताधिके ॥

आकाशगङ्गाचिह्ने तु या शिला सुरदीर्घिका ।
दक्षिणेन च तस्याग्रे किञ्चिदुष्णे च संस्थिता ॥
या ख्याता ललिता कान्ता ब्रह्महत्यापवाहिनी ।
अश्वत्थं नन्दिरूपञ्च मूले कूर्माकृतिः शिला ॥
नरः कदापि तं देवं न पश्यत्येव पातकात् ।
योनित्रयगतं लिङ्गं चतुर्हस्तप्रमाणतः ।
गतिप्रदीपिकाकारं कुण्डं सर्वाघनाशनम् ॥
तत्र व्यासेश्वरं देवं दृष्ट्वा नयति पातकम् ।
व्यासतीर्थे नरः स्नात्वा ललितां योऽभिपूजयेत् ॥
अश्वमेधसहस्रस्य तत्फलं लभते महत् ।
विंशद्धन्वन्तरे प्राच्यां वनदारुसुचिह्नितम् ॥
पद्मपत्राकृतिं पत्रं निर्यासपरिचिह्नितम् ।
तस्य मूलस्थिता देवी उच्चवारणरूपिणी ॥
तस्याः सम्पूजनादेव ग्रहदोषै र्न लिप्यते ।
वृक्षं तत्र स्थितं स्पृष्ट्वा बन्ध्या गर्भधरा भवेत् ॥
छिन्नहस्तो लभेत् स्वर्णं काले युक्तकरः पुमान् ।
दाड़िमस्य च पूर्वे तु नातिदूरे प्रतिष्ठितम् ॥
नवहस्तमितं रन्ध्रं तद्देवं भुवनेश्वरम् ।
पूजयेत् कामवीजेन विजयी जायते नरः ॥
तस्य वायव्यभागे तु अगस्त्यस्याश्रमे शुभे ।
देवं गदाधरं तत्र पूजयेत् कुसुमादिना ॥
नातिदूरे तु देवस्य या शिला श्वेतमुज्ज्वलम् ।
जल्पीशं तं महालिङ्गं पूजयेत्तावदुच्चरन् ॥
सौभाग्ये विधिवत् स्नात्वा जल्पीशं यस्तु पूजयेत् ।
अग्निष्टोमफलं तस्य भविष्यति मम प्रिये ! ॥
पश्चिमे तस्य पातालभुवनाधिपचिह्नितम् ।

एकविंशतिभूभागे स्थितस्तत्र सदाशिवः ॥
तं प्रणम्य नरो भक्त्या न भूयो जायते क्वचित्।
तस्य देवस्य भूभागे पवित्रे कालहस्तके ॥
गोविन्दपर्वते रम्ये शुक्लवर्णेन या शिला।
गोविन्दं तं विजानीयात् पूजयेद्धरिवासरे ॥
तस्य पूर्वे नवधनुर्या शिला शोणसन्निभा।
शरणेशी समाख्याता महापातकनाशिनी ॥
शिवाचले च तुङ्गे च प्रकटाख्या परा शिवा।
ताञ्च सम्पूज्य यत्नेन महतीं श्रियमाप्नुयात् ॥
विन्ध्याचलस्योत्तरे च इषुक्षेपनवान्तरे।
महालक्ष्मीः स्थिता तत्र सितपुष्पेण पूजयेत् ॥
श्रीपर्वते महेशानि! श्रीकुण्डे स्नानमाचरेत्।
स्नात्वा कुण्डे ध्रुवे नाम पौर्णमास्यां तथाश्विने ॥
दृष्ट्वा सम्पूजयेद्भक्त्या धराणामीश्वरो भवेत्।
गौतमस्याश्रमं गत्वा सम्पूज्य वृषभध्वजम् ॥
नरो न निरयं गच्छेत् पापस्य च क्षयो भवेत्।
पश्चिमादुत्तरं तावत् यावद्दक्षिणमानसम् ॥
तदन्तर्गतक्षेत्रे नातिदूरे च शङ्करि!।
गत्वा तत्र समभ्यर्च्य ब्रह्मलोकमवाप्नुयात् ॥
तत्रैव सरसस्तीरे हंसतीर्थमनुत्तमम्।
द्वादशादित्यमभ्यर्च्य उत्तमां दीप्तिमाप्नुयात् ॥
रेवन्तं पूजयित्वाथ गतिमाप्नोत्यनुत्तमाम्।
अभ्यर्च्येन्द्रं महैश्वर्यं गौरि! सौभाग्यमाप्नुयात् ॥
सर्वान् कामानवाप्नोति सम्पूज्य पुरुषोत्तमम्।
नारायणन्तु सम्पूज्य नराणामधिपो भवेत् ॥
दृष्ट्वा नत्वा नारसिंहं सङ्ग्रामे विजयी भवेत्।

वराहं पूजयित्वा तु भूमिराज्यमवाप्नुयात् ॥
सोमनाथं समभ्यर्च्य रुद्रलोके महीयते ।
पाण्डुकूटस्य या धारा सा धारा नर्मदा नदी ॥
तस्यां स्नात्वा चतुर्दश्यां वाजिमेधञ्च विन्दति ।
शिवविष्णोर्मध्यगता या च योनि विनिःसृता ॥
महानदी सा विज्ञेया सर्वपातकनाशिनी ।
नितम्बधनयोर्मध्ये सा धारा परमेश्वरि ! ॥
मङ्गला नाम सा धारा सर्वमङ्गलकारिणी ।
विल्वश्रीपर्वतान्ते च या धारा सा सरस्वती ॥
तस्याः स्वच्छोदकं पीत्वा कवीनामग्रणीर्भवेत् ।
मतङ्गस्य च या धारा नर्मदा सा न संशयः ॥
कामकुण्डस्य या धारा कामगङ्गा समुच्यते ।
कामाख्यायाश्च या धारा सा गङ्गा परिकीर्त्तिता ॥
नन्दिकुण्डस्य या धारा सा ज्ञेया च मधुस्रवा ।
कामधेन्वाश्च या धारा सा विज्ञेया सुधर्मिणी ॥
पद्मशैलस्य या धारा सा गङ्गा उर्वशी स्मृता ।
नीलकुण्डस्य या धारा सुभद्रा परिकीर्त्तिता ॥
व्यासकुण्डस्य या धारा चन्द्रभागा च सा स्मृता ।
शक्रशैलस्य या धारा उर्वशी सा निगद्यते ॥
सोमकुण्डस्य या धारा नदी वैतरणी च सा ।
यमशैलस्य या धारा सा च गोदावरी स्मृता ॥
भण्डीशस्य च यां धारां स्नात्वा पीत्वा प्रणम्य च ।
अग्निष्टोमशतस्यापि लभते फलमुत्तमम् ॥
धर्मारण्यं ततो गत्वा स्नात्वा रामह्रदे प्रिये ! ।
कोटिलिङ्गं ततो वीचेत् प्रापयेदामरीं तनुम् ॥
कामस्यैवोत्तरे देशे त्रिंशद्धन्वन्तरे प्रिये ! ।

कोटिलिङ्गन्तु यः पश्येद्वाजपेयफलं लभेत् ॥
प्राणदण्डाय नित्याय नमस्ते लोहिताय च ।
नमः सहस्रशीर्षाय कोटिलिङ्ग ! नमोऽस्तु ते ॥
नमो गिरिपते ! नित्यं गिरिवृक्षप्रियाय च ।
नमो यज्ञाधिपतये कोटिलिङ्ग ! नमोऽस्तु ते ॥
इत्यनेन तु सम्पूज्य जवापुष्पैः प्रपूजयेत् ।
पायसञ्च बलिं दत्त्वा स्तुत्वा जप्त्वा विसर्जयेत् ॥
तस्य दक्षिणपार्श्वेन या शिला पार्श्वसङ्गता ।
वेतालं तं महादेवं वामे विष्णुद्विकर्णकम् ॥
पुष्पाञ्जलिं गृहीत्वा तु पठेन्मन्त्रमनन्यधीः ।
धर्मकामार्थमोक्षाय क्रूराय कथनाय च ॥
संख्याय सांख्यमुख्याय वेतालाय नमो नमः ।
कृष्णाजिनोत्तरीयाय पीतवस्त्रधराय च ॥
त्वमेव ब्रह्मा विश्वेश ! ब्रह्मरूप ! नमोऽस्तु ते ॥
तस्याग्रतो ब्रह्मयोनिं निर्गमे मन्त्रदुःसहम् ।
ब्रह्मयोनिं विशेद्यस्तु न पुन र्योनिमाविशेत् ॥
तिर्य्यग्योनिं न गच्छेत्तु ब्रह्मणः पदमाविशेत् ।
शिववल्लभदेशे तु मोक्षमार्गनिरोधके ॥
प्रसन्नो देवदेवेश ! त्राहि मां योनिसङ्कटात् ।
निःसृतो ब्रह्मयोनेः स गणेशं द्वारि पूजयेत् ॥
महाकायं शिलोत्कृष्टं मन्त्रेणानेन साधकः ।
नमो लम्बोदर ! श्रेष्ठ ! देवानामिष्टदायक ! ॥
अखिलाख्यं प्रभो ! नाथ ! नमस्ये योनिसङ्कटम् ।
ततो गच्छेन्मुक्तिमार्गं शर्म्भस्याभिमुखे यदि ॥
वामदक्षिणपार्श्वे द्वे युगे च सत्यसम्भवे ।
ऊर्द्ध्वं कृतयुगञ्चैव पार्श्वे त्रेता च द्वापरः ॥

बलिवक्त्रे स्थितं लिङ्गं गुप्ताख्यं भुवनेश्वरम् ।
तं प्रणम्य नरो भक्त्या प्राप्नुयादैश्वरं पदम् ॥
चतुर्युगं नमस्कृत्य स्पृष्ट्वा देवं कपर्दिनम् ।
न जायते पुनर्गर्भे युगदोषैर्न लिप्यते ॥
युगानामधिपः सोहि जगज्ज्योतिस्वरूपधृक् ।
तद्युगे यत् कृतं पापं त्राहि त्वं परमेश्वर ! ॥
सम्भूतिभूतिपर्य्याप्त ! त्रेतायुग ! नरेश्वर ! ।
यद्युगे यत् कृतं पापं तद्व्यपोहतु भूमिजम् ॥
सत्यसाधन ! सत्याख्य ! नरनारायणात्मक ! ।
हेतुभूत ! कृतादीनां सत्यधर्म ! नमोऽस्तु ते ॥
विजयादौ याऽस्य चाज्ञा युगचक्र ! बलीश्वर !
नमामि सततं भक्त्या पापं हर नमोऽस्तु ते ॥
पञ्चाक्षरेण मन्त्रेण पूजयेच्च कपर्दिनम् ।
राजसूयाश्वमेधस्य तत् फलं प्राप्नुयान्नरः ॥
कामधेनुं ततो दृष्ट्वा सर्वान् कामानवाप्नुयात् ।
पूजयित्वा नमस्कृत्य ब्राह्मणान् भोजयेत्ततः ॥
सौरभेय्यै नमस्तुभ्यं कामगे ! कामचारिणि ! ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
सन्दिष्टश्च कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।
तुलापुरुषदानेन यत् फलं समुदाहृतम् ॥
तत् फलं समवाप्नोति कामधेनोश्च दर्शने ।
दक्षिणां गुरवे दद्यात् सवित्रेऽर्घ्यं निवेदयेत् ॥
शान्तिं कृत्वा ततो देवि ! आसन् कुर्य्यादनन्यधीः ।
उत्थाय सूर्य्यं संवीक्ष्य पठेन्मन्त्रद्वयं प्रिये ! ॥
नमोऽस्तु काल्यै गिरिजायै कामेश्वर्य्यै नमोऽस्तु ते ।
नमोऽस्तु देव्यै गिरिसम्भवायै नमः

समलीलाबलं सत्यमिदं सुरेश ! ।
अतीर्थे तीर्थनिष्ठेभ्यो व्यासादिभ्यो नमो नमः ।
गणेभ्यो रक्षकेभ्यश्च क्षत्रियेभ्यो नमो नमः ॥
पौण्ड्रविघ्न ! नमस्तेऽस्तु नमस्ते कामभैरव ! ।
नमस्ते दक्षिणामूर्त्ते ! दण्डपाणे ! नमोऽस्तु ते ॥
तीर्थं गत्वोपवासश्च श्रद्धा च जपकर्मणि ।
करिष्यतीति विश्वास एतत् सिद्धेस्तु लक्षणम् ॥

श्रीदेव्युवाच । यो नरः पापकर्माणि क्षेत्रेऽस्मिन् कुरुते सदा ।
सुरादिपातकं घोरं स किं मोक्षं गमिष्यति ॥

ईश्वर उवाच । पुण्यक्षेत्रे स्थितो यो वै पातकेषु रतः सदा ।
योनिं प्रविश्य मनुजो वर्षाणामयुतं वसेत् ॥
परे पुरे च तत्रैव ज्ञानं सम्पद्यते ततः ।
मोक्षं गमिष्यति सोऽपि गुह्यमेतन्मम प्रिये ! ॥
सुलभोऽन्यत्र लौहित्यः पञ्चस्थानेषु दुर्लभः ।
अगस्त्यस्य च तीर्थे च मणिकर्णे ह्रदे तथा ॥
अपुनर्भवे चन्द्रकुण्डे स्थानपञ्चकमीरितम् ।
अत्रतेन विशेषेण शतमार्गसहस्रकः ॥
क्षेत्रबाह्यस्थितैः शून्यैः कश्चिन्नास्ति विशेषकः ।
कालाख्यो रणभद्रश्च सौरभश्च महाबलः ॥
वेतालश्च विकटश्च एते पूर्वे स्थिता गणाः ।
एकजङ्घोऽनलश्चैव कर्दमालिप्तविग्रहः ॥
घण्टाकर्णस्तदूर्द्ध्वञ्च दक्षिणं पार्श्वमास्थिताः ।
बलनाशो भीषणश्च पश्चिमायां व्यवस्थितः ॥
पञ्चमो लोहिताक्षश्च नन्दनश्च तथा मतः ।
केशवश्चक्रपाणिश्च धनदस्योत्तरे गणाः ॥

मधुरो मधुकश्चैव जयन्तश्च मधुप्रियः।
अविशेषेण रक्षन्ति त्रयः कामेश्वरीस्थिताः॥
गणेशः कालदण्डश्च विकर्णश्च कपिध्वजः।
द्वारं रक्षति वै सर्वं मण्डपञ्च स्वयं हरः॥
कन्दर्पो मकरन्दश्च प्रबलश्च गदाधरः।
सोमश्च विपुलश्चैव अश्वतीर्थे स्थिता गणाः।
शतसाहस्रयक्षिण्यो मुक्तिद्वारञ्च रक्षन्ति॥
दशसाहस्रकैश्चैव अन्तर्गेहञ्च रक्षति।
कुब्जतीर्थं ततो रक्षत्यष्टभि र्दशभिर्युतैः॥
तीर्थे प्रासादकरणे धर्मारम्भे विशेषतः।
व्रतयज्ञसमारम्भे विघ्नानि निवसन्ति वै॥
तेषां सम्पूजयेदादौ बलिभिर्मोदकादिभिः।
अन्यथा जायते विघ्नमिति जानीहि मे प्रिये!॥
अथापराणि विघ्नानि शरीरे निवसन्ति वै।
मानसानि ज्ञानहराण्येतानि त्वं शृणु प्रिये!॥
कश्चिन्निवर्त्तको देवि! कश्चित् प्रवर्त्तकस्तथा।
सन्निकर्षं विदूरं वा सहस्रं लक्षमेव वा॥
पापानुस्मरणञ्चैव आलस्येनापि दूषणम्।
शोकमोहजराव्याधितारुण्यधननाशकम्॥
कलहं भार्य्यया सार्द्धं दुर्भिक्षं गृहसङ्कटम्।
नानाव्रतसमाकीर्णं धार्मिकोऽस्मीतिमानसः॥
शास्त्रमीक्षन्तु धर्मस्य कारणे हीनपातकम्।
वृक्षपत्रञ्च तुलसी धात्रीवृक्षफलं तथा॥
शालग्रामशिलाखण्डं प्रतिमादारुजं तथा।
मानुषं ब्राह्मणञ्चैव स्वयम्भूवर्त्तुलं शिवम्॥
शङ्खशम्बूकभेदञ्च खड्गस्य मांससम्भवम्।

दृष्ट्वा सर्वं भवेदेवं तीर्थजातं जलं तथा ॥
गङ्गायां वा नदीरूपं पुण्यक्षेत्रञ्च भूमिका ।
इत्येतानि च विघ्नानि संयान्ति च पुनः पुनः ॥
मन एवोत्तरेन्नित्यं मन एवात्र कारणम् ।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥
तन्निष्ठस्तत्परं जातं तन्मुख्यं दुःखकारणम् ।
चित्तमन्तर्गतं दुष्टं तीर्थस्नाने निषिध्यते ॥
पठेद् यः शृणुयाद्वापि भक्तिं मुक्तिमवाप्नुयात् ।
पुत्रार्थी लभते पुत्रं कीर्त्त्यर्थी कीर्त्तिमाप्नुयात् ॥
विद्यार्थी लभते विद्यां जयार्थी लभते जयम् ।
ब्रह्महत्यादिपापानां पापशुद्धिमवाप्नुयात् ॥
बन्ध्यापि लभते पुत्रं कन्या विन्दति सत्पतिम् ।
मोक्षार्थी लभते मोक्षं भोगार्थी भोगमाप्नुयात् ॥
काव्यार्थी च कवित्वञ्च निःसारः सारमाप्नुयात् ।
ज्ञानार्थी लभते ज्ञानं सर्वसंसारनाशनम् ।
इदं स्वास्त्ययनं धन्यं योगिनीनाम तन्त्रकम् ॥
नाकाले मरणं तस्य श्लोकमेकन्तु यः पठेत् ।
श्लोकार्द्धपठनादस्य दुष्टग्रहक्षयो भवेत् ॥

इति श्रीयोगिनीतन्त्रे सर्वतन्त्रोत्तमे द्वितीयभागेऽष्टमः पटलः ।

---

## अथ नवमः पटलः ।

श्रीभगवानुवाच ।

शृणु देवि ! प्रवक्ष्यामि निर्मलं भुवि दुर्लभम् ।

लिङ्गाष्टकशतं चक्रे हरिचेत्रसमं शुभम् ॥
विष्णुपुष्करकं चेत्रं शताष्टतीर्थसंयुतम् ।
हृष्टपुष्टजनाकीर्णं नरनारीसमन्वितम् ॥
विदुषां गणभूयिष्ठं धनधान्यादिसंयुतम् ।
गृहाणां पुरतो रम्यं भुवि चत्वरभूषितम् ॥
नानामणिगणाकीर्णं नानारत्नोपशोभितम् ।
नानातोरणसङ्कीर्णं वीथीभिः समलङ्कृतम् ॥
राजहंसीनिभैः शुभ्रैः प्रासादैरुपशोभितम् ।
सततञ्च जलै र्धौतं सुराभाण्डमिवाशुचि ॥

यदि वसति गुहायां पर्वताग्रे चिरं वा
यदि वसति त्रिखण्डे तस्य पार्श्वे च दूरे ।
यदि पठति पुराणं वेदसिद्धान्ततत्त्वम्
यदि हृदयमशुद्धं सर्वमेतद्विरुद्धम् ।

न तीर्थानि न दानानि न व्रतानि न चाश्रमाः ।
दुष्टाशयं दुष्टरति प्रनष्टव्याधि चेन्द्रियम् ॥
इन्द्रियाणि वशीकृत्य यत्र तत्र वसेन्नरः ।
तत्र तस्य कुरुचेत्रं प्रयागं पुष्करं गयाम् ॥
न लङ्घयेत् पानधर्मं देशधर्मं न लङ्घयेत् ।
यस्मिन् पीठे य आचारः स आचारो विधिः स्मृतः ॥
ओड्रे पुरुषोत्तमचेत्रे पीठे च वरवर्णिनि ! ।
अन्नं न दूषयेत् तत्र ब्राह्मणैन च हत्यता ॥
स्पृष्टास्पृष्टो योनिदोषः पानदोषो न गण्यते ।
विवाहव्यत्ययस्तत्र परिवित्ति र्न दूष्यति ॥
शयनञ्चैव शेषे तु स्त्रीजनैः सह संस्थितिः ।
जालन्धरे शिलातीर्थे न दुष्येन्मत्स्यमांसकम् ॥
पादुकाया विशुद्धिश्च शुभ्रं तक्रञ्च गर्हितम् ।

पूर्णसन्ध्या स्वधर्मेण कालधर्मो न विद्यते ॥
सर्वंश्रीयोगिनीपीठे धर्मं कैतवजं मतम् ।
कामरूपे न सन्यासस्तथा दीर्घव्रतं प्रिये ! ॥
न त्यजेत् सामिषं देवि ! ब्रह्मचर्य्यमतं न च ।
संसर्गपातकेनैव स्त्रीधर्मो धर्ममाश्रयेत् ॥
न शुक्रदर्शनं स्त्रीणां ताम्बूलाशा सदा भवेत् ।
हंसपारावतं भक्ष्यं कूर्मं वाराहमेव च ॥
कामरूपे परित्यागाद्दुर्गतिस्तस्य सम्भवेत् ।
हीनाचारस्तु संसारे सर्वाशी सर्वविक्रयी ॥
तत्र नारी सदा तुष्टा तत्र राजा सुपुण्यवान् ।
कोल्वपीठे जातिधर्मान् स्वजात्युक्तेन वर्त्तयेत् ॥
धर्माधर्मविचारेण स्वं रूपं स्वनिरूपकम् ।
महेन्द्रे चैव योगी च ब्रह्मज्ञानी सुबुद्धिमान् ॥
श्रीहट्टे पानविपुलं न चान्नस्य परिक्रिया ।
एतत् सर्वं समाख्यातं यत् पृष्टं सिद्धिदायकम् ॥
आशिषश्च न दातव्यं देवब्राह्मणनिन्दके ।
पिशुनाय न दातव्यं वेदभक्तिविवर्जिते ॥
दातव्यं भक्तियुक्ताय स्वधर्मनिरताय च ।
विविधैः सुन्दरैः शुभ्रैः प्रासादैरुपशोभितम् ॥
रचितं शस्त्रसङ्घैश्च परिखाभिरलङ्कृतम् ।
सितरक्तैस्तथा पीतैः कृष्णैश्चान्यैश्च वर्णकैः ॥
धूम्रैः समीरणैः धूमैः पताकाभिरलङ्कृतम् ।
नित्योत्सवं प्रमुदितं नानावादित्रनिस्वनम् ॥
वीणावेणुमृदङ्गेन चैपुणोभिरलङ्कृतम् ।
देवतायतनैर्दिव्यैः प्राकारोद्यानमण्डितैः ॥
पूज्य विचित्ररचितैः सर्वतः समलङ्कृताः ।

स्त्रियस्तत्र प्रमुदिता दृश्यन्ते तनुमध्यमाः ॥
हारभारार्पितग्रीवाः पद्मपत्रायतेक्षणाः ।
पीनोन्नतकुचयुगाः पूर्णचन्द्रसमाननाः ॥
स्थिरालकाः सुकपोलाः काञ्चीनूपुरनादिताः ।
सुकल्पचारुजघनाः कर्णान्तायतलोचनाः ॥
नानाजलाशयैश्चान्यैः पद्मिनीशतमण्डितैः ।
सरांसि च मनोज्ञानि प्रसन्नसलिलानि च ॥
कुमुदैः पुण्डरीकैश्च तथा नीलोत्पलैः शुभैः ।
कदम्बैश्चक्रवाकैश्च तथैव जलकुक्कुटैः ॥
कारण्डवोत्करैर्हंसैस्तथान्यैर्जलचारिभिः ।
एवं नानाविधैर्वृक्षैः पूर्णं नानाविधैरवैः ॥
नानाजलाशयैश्चान्यैः शोभितं तत्समन्वितम् ।
आस्ते तत्र स्वयं देवो हयग्रीवो जनार्दनः ॥
पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च ।
पुष्करिण्यस्तड़ागानि वाप्यः कुण्डाश्च सागराः ॥
तेभ्यः पूर्वं समाहृत्य जलानि च पृथक् पृथक् ।
सर्वलोकहितार्थाय रुद्रः सोमो गणैः सह ॥
तीर्थमपुनर्भवं नाम तस्मिन् क्षेत्रे वरानने ! ।
चकार कामिभिः सार्द्धं ततोऽपुनर्भवं स्मृतम् ॥
अस्मिंश्च विपुले क्षेत्रे माघे मासि मम प्रिये ! ।
यस्तत्र यात्रां कुरुते विपुले विजितेन्द्रियः ॥
विधिवत् सरसि स्नात्वा ततः श्रद्धासमन्वितः ।
देवानृषीन्मनुष्यांश्च पितॄन् सन्तर्पयेत्ततः ॥
तिलोदकेन विधिवन्नामगोत्रविधानतः ।
स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत् ॥
ग्रहोपरागविषुवे संक्रान्त्यामयने तथा ।

युगादौ षड़शीत्याञ्च तथान्ये च शुभे तिथौ ॥
ये तत्र दानं विप्रेभ्यः प्रयच्छन्ति धनादिकम् ।
अन्यतीर्थाच्छतगुणं फलन्तु प्राप्नुवन्ति वै ॥
पिण्डं तत्र प्रयच्छन्ति पितृभ्यः सरसस्तटे ।
पितॄणामक्षयां तृप्तिं तत् करोति न संशयः ॥
धनुरष्टप्रमाणञ्च कुण्डमानं प्रकीर्त्तितम् ।
वराहकामयोर्मध्ये तत्तीर्थं सर्वकामदम् ॥
पुनर्न भवनं यस्मादपुनर्भवं तत् सरः ।
तत्र स्नात्वा नरो याति भास्करस्यालयं प्रति ॥
न पुनर्जायते जन्तुर्यस्मात् त्वयि निमज्जनात् ।
अनेन स्नानं कुर्य्यात्तु पश्येद्देवं त्रिलोचनम् ॥
गोकर्णञ्च त्रिकर्णञ्च योगीशं सर्वकामदम् ।
गोकर्णं वृषभाकारं त्रिकर्णं पुरुषाकृतिम् ॥
अधस्ताच्चैव योगानां योगस्थानं ततः परम् ।
उत्तरे च सरस्तीरे पर्वते भद्रकाशके ॥
या शिला पौण्ड्रवित्ता च मध्ये शोणच्युतिः प्रिये ! ।
पञ्चधन्वन्तरे यावद्वरवीथीति चैत्रकम् ॥
तस्याः शैवशिलायास्तु स्वभागे देवतात्रयम् ।
सम्पाद्य विधिवद्भक्त्या गन्धैः पुष्पैः पृथग्विधैः ॥
चतुर्दश्याञ्च मिथुने मृते मोक्षमवाप्नुयात् ।
त्रिशूलाभयहस्ताय यज्जटाभारधारिणे ॥
वृषध्वजाय देवाय गोकर्णाय नमो नमः ।
युगरूपाय देवाय चन्द्रहस्ताय विष्णवे ॥
गदाशारङ्गहस्ताय त्रिकर्णाय नमो नमः ।
महेशाय वृषस्थाय ज्ञानरूपाय ज्ञानिने ॥
धर्मज्ञाय स्वरूपाय योगीन्द्राय नमोऽस्तु ते ।

अपुनर्भवपूर्वं तु नवधन्वन्तराय च ॥
सप्तधन्वन्तरं यावत् कुण्डं वाराणसीयकम् ।
तत्र स्नात्वा महेशानि ! मृते मोक्षमवाप्नुयात् ॥
चैत्रे कामत्रयोदश्यां मन्त्रेणानेन यत्नतः ।
सर्वपापविनिर्मुक्तः स गच्छेद् ब्रह्मणः पदम् ॥
सर्वतीर्थेषु यैः स्नानं कृतं वर्षशतैरपि ।
सकृद्वाराणसीकुण्डे स्नात्वा तत् फलमाप्नुयात् ॥
तस्य पूर्वधनुः पञ्च दैर्घ्यमानेन शङ्करि ! ।
मार्कण्डेयह्रदो नाम तत्र स्नात्वा व्रजेच्छिवम् ॥
उत्तरेण सरस्तीरे मार्कण्डेश्वरसंज्ञितम् ।
ये वा पश्यन्ति च स्नात्वा कुण्डे माहेश्वरं ततः ॥
आदित्यमर्चितं तत्र देवदेवं त्रिलोचनम् ।
सर्वपापविनिर्मुक्तो विमानवरमास्थितः ॥
उपगीयमानो गन्धर्वैः शिवलोकं व्रजन्ति वै ।
तिष्ठन्ति तत्र मुदिताः कल्पमेकं वरानने ! ॥
मार्कण्डेयो मुनिश्रेष्ठस्तपस्तेपे महामतिः ।
मार्कण्डेयह्रदो नाम विख्यातो मे ह्रदो वरः ॥
अनेन मज्जनं कृत्वा कुर्य्यान्मुण्डस्य मुण्डनम् ।
श्राद्धं कुर्य्यात् प्रयत्नेन उपवासं समाचरेत् ॥
ततः प्रभाते विमले नित्यं निर्वर्त्त्य साम्प्रतम् ।
गोकर्णस्य च देवस्य नातिदूरे महेश्वरि ! ॥
कुण्डं ब्रह्मसरो नाम एकविंशतिमानतः ।
तत्र स्नात्वा क्रमहरं न पुनर्भवमादिशेत् ॥
मुक्तये सर्वपापानां ब्रह्मणा निर्मितं पुरा ।
ब्रह्मकुण्ड ! महाभाग ! त्राहि मां भवसागरात् ॥
स्नात्वा चानेन मन्त्रेण सरसस्तस्य पश्चिमे ।

कृष्णाख्यशैलरूपश्च वराहो नाम नामतः॥
तं प्रणम्य नरो भक्त्या विष्णुलोके प्रमोदते।
पिशङ्गरोमाञ्चिततुङ्गकायं दंष्ट्राप्रभाग्रैश्च धराधराय।
मनोज्ञनीलाचलमूर्त्तये च मुक्तिप्रदायाऽस्तु नमो नमस्ते॥
गोकर्णस्य तदैशान्यां इषुक्षेपत्रयान्तरे।
मदने पर्वते रम्ये गत्वा पश्येच्च शङ्करम्।
केदाराख्यं महादेवं सर्वदेवनमस्कृतम्॥
तं लिङ्गमव्ययं दृष्ट्वा श्रद्धया सुसमाहितः।
स्थापयित्वा तु तं भक्त्या गन्धैः पुष्पैर्मनोहरैः॥
धूपैर्दीपैश्च नैवेद्यैर्नमस्कारैस्तथा स्तवैः।
दण्डवत् प्रणिपातैश्च नृत्यगीतादिभिस्तथा॥
सम्पूज्य तं विधानेन शिवलोकं व्रजेन्नरः।
मदने सागरश्रेष्ठ! सुखसौभाग्यदायक!॥
आरोहयामि शिखरं पापं हर नमोऽस्तु ते।
पूर्वाशाभिमुखो भूत्वा गत्वा कुर्य्यात् प्रदक्षिणम्॥
क्षणेनैव समुद्धृत्य शिवलोकं स गच्छति।
शिवं शुक्लवर्णं श्वेतवृषभारूढं पद्मासनस्थम्॥
श्वेतनागयज्ञोपवीतिनं वरदाभयहस्तं सोमसूर्य्याग्निचक्षुषम्।
जटामुकुटचन्द्रशेखरं शितभस्माङ्गलेपनम्॥
अर्द्धनारीश्वरं पञ्चवक्त्रं त्रिनेत्रम्।
स्वस्य वामे तत्पुरुषे अघोरमीशानम्॥
सद्यः पश्चिमं डमरुखड्गादिधारिणम्।
खड्गगोक्षीरयोर्वर्णं उत्तरं वामदेवकम्॥
शङ्खचक्रधारिणं तप्तहेमाभवर्णम्।
पूर्वं तत्पुरुषं देवं गदापद्मधरं परम्॥
स्वच्छसिन्दूराभं दक्षिणमघोरं त्रिशूलम्।

कपिलविटङ्कदंष्ट्रं नीलमेघाञ्जनोपमम् ॥
एवं केदाराख्यं शिवं ध्यात्वा शिवतन्त्रोक्तेन पूजयित्वा प्रतिपुष्पाञ्जलिं गृहीत्वा प्रतिमन्त्रेण पूजयेत् ।
नमश्चन्द्रार्द्धचूड़ाय नमः खट्वाङ्गधारिणे ।
नमोऽस्तु शूलहस्ताय केदाराय नमो नमः ॥
सर्व्वलोकेश्वरं देवं मोक्षकारणमव्ययम् ।
निष्कलं परमं देवं प्रणतोऽस्मि पुरातनम् ।
सर्व्वेषामेव गोप्तारं नमस्ये शम्भुमव्ययम् ॥
शब्दातीतं गुणातीतं नमस्ये शम्भुमव्ययम् ।
इति प्रसादनं कृत्वा केदारस्य च पश्चिमम् ॥
गत्वा ब्रह्मवटं वृक्षं नरः समवधारयेत् ।
केदारञ्च नमस्कृत्य कल्पवृक्षं ततः पुनः ॥
दशजन्मार्जितं पापं तत्क्षणादेव नश्यति ।
नमोऽव्यक्तस्वरूपाय महामलयवासिने ॥
महेन्द्रस्योपरिष्ठाय न्यग्रोधाय नमो नमः ।
केदारस्य च कौवेरे इषुक्षेपत्रयान्तरे ॥
पौष्पके नगरे क्षेत्रे कमलाक्षहरं यजेत् ।
संसारसागरे मग्नं पापग्रस्तमचेतनम् ॥
त्राहि मां भवनेत्रघ्न ! त्रिपुरारे ! नमोऽस्तु ते ।
त्रिपुरारे ! नमस्तेऽस्तु कमलेश ! नमोऽस्तु ते ॥
दक्षिणे कल्पवृक्षस्य इषुक्षेपान्तरे प्रिये ! ।
छत्रकोरगिरि र्योऽसौ स गिरिः पारिपात्रकः ॥
तस्यारोहणमात्रेण न पुन र्जायते भुवि ।
अष्टषष्टिस्तु शैलेऽस्मिन्मध्ये उन्नतको गिरिः ॥
मन्दराख्यन्तु तं शैलं गत्वा तत्र समाहितः ।
पूर्व्वभागे तु शैलस्य स्थितो मधुरिपु र्हरिः ॥

दर्शनात्तस्य देवस्य कुलानां तारयेच्छतम्।
केदारमुदकं पीत्वा कामधेनुं स्पृशेद्यदि॥
पूजयेत् केशवं भक्त्या न भूयो जायते क्वचित्।
अनुत्तमोत्तमं चैव शैलं मन्दारकं प्रिये!॥
ककुदेश्वरहरं दृष्ट्वा स याति परमां गतिम्।
ब्रह्मेश्वरश्च तत्रैव होममध्ये प्रतिष्ठितः॥
ब्रह्मेश्वरं नमस्कृत्य ब्रह्मज्ञानमवाप्नुयात्।
भावभूतेश्वरं दृष्ट्वा कृत्वा चैव प्रदक्षिणम्॥
मुच्यते पापसङ्घैश्च शिवलोके महीयते।
सम्पूजयेच्छिवं यस्तु मन्दारे चैत्रपर्वते॥
जन्मार्जितस्य पापस्य दर्शनाद्याति संक्षयम्।
प्रयागे सङ्गमे स्नात्वा यत् फलं लभते नरः।
तत् फलं लभते चाग्र्यं सहस्रगुणमेव हि॥
धर्मेश्वरस्य देवस्य कूपस्तिष्ठति चाग्रतः।
तत्र स्नानेन देवेशि! पिण्डनिर्वपणेन च॥
गोसहस्रफलं सम्यक् लभते च वरानने।
पारिपात्रस्योत्तरतो धनुर्विंशान्तरे प्रिये!॥
कपिलस्याश्रमे रम्ये सम्पश्येत् कपिलेश्वरम्।
तं सम्पूज्य नरो भक्त्या विष्णुलोके महीयते॥
पारिपात्रे स्थितं देवं सर्वाघभयनाशनम्।
न तेषां ये प्रपश्यन्ति भयं संसारसागरे॥
पिशाचमोचनं नाम तीर्थं तस्य च पूर्वतः।
धनुरेकादशान्ते च तत्रैव कालभैरवः॥
कृष्णं गौरं वृषाकारं पूर्वभागे गतं प्रिये!।
पिशाचमोचने तीर्थे पूजयामास शूलिनम्॥
इत्थं देवस्य तल्लिङ्गं कपर्दीश्वरमुत्तमम्।

पूजनीयं प्रयत्नेन स्तोतव्यं विविधैः स्तवैः ॥
व्याघ्रेश्वरस्य देवस्य दक्षिणे वरवर्णिनि ! ।
स्वयम्भूस्तत्र लिङ्गं वै देवानामपि दुर्लभम् ॥
पूर्वमुखन्तु तल्लिङ्गं श्रेष्ठस्थानमुदाहृतम् ।
कृत्तिवासेश्वरं प्राप्य संसारविगतज्वरः ॥
संसारभयनिर्मुक्ताः सर्वपापविवर्जिताः ।
सुखेन मुक्तिमायान्ति यथार्हन्ति यतस्तथा ॥
व्याघ्रेश्वरस्य चैशान्ये धनुर्दशप्रमाणतः ।
कृत्तिवासेश्वरं प्राप्तं लिङ्गयोनिप्रतिष्ठितम् ॥
कृत्तिवासेश्वरो देवो द्रष्टव्यश्च पुनः पुनः ।
यदीच्छेत्तारकं ज्ञानं शाश्वतं चामृतं पदम् ॥
एतत् सर्वञ्च कर्त्तव्यं यदीच्छेत् सुखमात्मनः ।
मदनाचलस्यैशाने इषुक्षेपत्रयान्तरे ॥
वाणेश्वरन्तु विख्यातं सप्तपातालभेदकम् ।
वत्सहृतन्तु लिङ्गानां सर्वेषामुत्तमोत्तमम् ॥
तं प्रणम्य नरो भक्त्या वत्सराज्जायते नरः ।
तस्य देवस्य वायव्ये नानावर्णेन या शिला ॥
गरुड़ाख्यं महालिङ्गं पूजयेद्गरुड़ं विना ।
दर्शनात्तस्य देवस्य गोशतस्य फलं लभेत् ॥
नमस्ते पक्षिराजेन्द्र ! वासुदेवहिते रत ! ।
अनुज्ञां देहि पक्षीश ! त्वमस्य दर्शनं प्रति ॥
प्रणिपत्य पठेन्मन्त्रं पश्चिमस्यान्तरे महत् ।
विष्णोरायतनं प्राप्य तत्र शिवजलं शुभम् ॥
स्नात्वा च मुण्डनं कृत्वा ध्यात्वा विष्णुं क्षपेन्निशाम् ।
ततः प्रभाते देवेशि ! मणिकूटस्य उत्तरे ॥
कलभाख्या नदी पुण्या सर्वपापप्रमोचनी ।

तत्र स्नात्वा चतुर्दश्यां माघे वा फाल्गुनेऽथवा ॥
वल्लभायाञ्च देवेशि ! महापातकनाशनम् ।
वल्लभायां नरः स्नात्वा नीलकण्ठस्य दर्शनात् ॥
न स्पृशन्तीह पापानि सप्तजन्मकृतान्यपि ।
तस्मिंस्तीर्थे नरः स्नात्वा दृष्ट्वा सादरमाधवम् ॥
यत्र तत्र स्थितो वापि संसारे न पुनर्विशेत् ।
संसारे पतितानाञ्च गङ्गा त्राणकरी भवेत् ॥
वराहविवरं दृष्ट्वा नरो गच्छेन् महानदीम् ।
अशोकामलसं याता कोलदण्डविनिःसृता ॥
नन्दिनी पङ्कजा चैव नदी मधुमती परा ।
मणिकूटे च संयाता तस्य तत्राधिकं फलम् ॥
नमोऽस्तु ते पुण्यजले ! नमः सागरगामिनि ! ।
नमस्ते पापविमले ! नमो देवि ! वराङ्गने ! ॥
अपुनर्भवजले स्नात्वा विशेल्लोकणमीश्वरम् ।
स्वर्गद्वारञ्च तत्रैव इमं मन्त्रमुदीरयेत् ॥
ब्रह्मा विष्णुस्तथा रुद्रः सर्वदेवैर्निरूपितः ।
स्वर्गद्वारं महापुण्यं समारोहेत् सुदुर्लभम् ॥
दशलक्षणयुक्ताय चतुष्पादाय चारवे ।
अर्घ्यं ददामि धर्माय स्वर्गद्वारनिवासिने ॥
गत्वा तत्र पञ्चहस्तं नमस्कुर्य्यादतन्द्रितः ।
ह्रदे वाराणसीये च मार्कण्डेयसरे तथा ॥
स्नात्वा कामहरं दृष्ट्वा कल्पवृक्षं नमेत्ततः ।
स्नात्वा पश्चाद्दुर्लभायां ततो हरिगृहं व्रजेत् ॥
यत्तत्र तीर्थं विधिवत् करोति नियतेन्द्रियः ।
कुलैकविंशमुद्धृत्य विष्णुलोकं स गच्छति ॥
मणिकूटस्य पूर्वे तु नातिदूरे महेश्वरि ! ।

विष्णुपुष्करकं नाम सर्व्वतीर्थोद्भवं जलम् ॥
तत्र स्नात्वा वरारोहे ! विपुलां लभते श्रियम् ।
पुष्कराकारमास्थाय स्थितोऽसौ वसुधातले ॥
मर्त्यलोकहितार्थाय पापं मे हर पुष्कर ! ।
स्नात्वा चानेन मन्त्रेण वारुणं तत्र सञ्जपेत् ॥
दद्यादर्घ्यञ्च विधिवदारोहेदपि कूटकम् ।
मणिकूटाचले विष्णुर्हयग्रीवस्वरूपधृक् ॥
शतबाहुप्रमाणञ्च अचलाष्टसहस्रकम् ।
मन्त्रेणारोहयेद्देवि ! पीतपुष्पेण पूजयेत् ॥
ततः स विष्णुदेहञ्च द्वारिकञ्च प्रसादयेत् ।
दण्डहस्त ! महाबाहो ! कालदैत्यनिसूदन ! ॥
द्वारपाल ! नमस्तेऽस्तु कवाटं देहि मे सदा ।
पीतञ्च द्विभुजं शान्तं मणिकुण्डलचर्च्चितम् ॥
चक्रं बाणधरं शुक्लं नमस्ते परिवेष्टितम् ।
सर्व्वलक्षणसम्पन्नं मणिशैलं त्रिलोचनम् ॥
ध्यात्वा तत्पीठके मन्त्रमारोहेत् शिखरं तदा ।
मणिकूट ! गिरिश्रेष्ठ ! पीतवर्ण ! त्रिलोचन ! ॥
त्वय्यद्यारोहणं कृत्वा द्रक्ष्यामि भवनं तथा ।
तं पूर्व्वाभिमुखेनैव उत्तराभिमुखेन वा ॥
आरोहेन्मणिशैलञ्च वर्जयेदन्यदिङ्मुखम् ।
गत्वा विन्ध्याचलं पश्चात् कृत्वा तत् त्रिः प्रदक्षिणम् ॥
प्रविश्य संयतो भूत्वा धौतवासा जितेन्द्रियः ।
मूलेन स्नापयेद्देवं सौगन्धिकजलैः शुभैः ॥
कर्पूरवासितैर्द्रव्यैः सुगन्धिकुसुमादिभिः ।
चन्दनागुरुपद्मानि यानि काम्यानि कानिचित् ॥
कृत्वानि कुण्डमालिख्य तज्जले स्नानमाचरेत् ।

सिताम्लजलैश्चैव तथा कोष्णोदकेन च ॥
उष्णेन वारिणा चैव क्रमात् पञ्चामृतेन च ।
त्रिसितेन त्रिगन्धेन त्रिजलेन मम प्रिये ! ॥
प्रीत्यर्थं तस्य देवस्य स्नानं देवि ! समाचरेत् ।
त्रिसितं चन्दनं पद्मसुशीरं परिकीर्त्तितम् ॥
नित्यं मलयजं मर्त्यं त्रिगन्धं सुमनोहरम् ।
तीर्थोदकं गन्धतोयं कर्पूरस्योदकं तथा ॥
त्रिजलञ्च महेशानि ! स्नापयेदन्तरान्तरे ।
स्नापयित्वा यथोक्तेन तथा स्नानं समाचरेत् ॥
अर्द्धस्नानं ततः कुर्य्याद्विधिज्ञः परमेश्वरि ! ।
अष्टोत्तरसहस्रैस्तु सुवर्णघटितैर्युतैः ॥
तण्डुलैः स्नापनं कुर्य्यात् कर्पूरादिविमिश्रितम् ।
अशक्तास्तु शतं कुर्य्याद्दशधा सुरसुन्दरि ! ॥
ताम्रैर्वा राजतैर्वापि अथवा सति सम्भवे ।
मार्त्तिकैर्वा घटैः स्नानमशक्तस्तु समाचरेत् ॥
स्नानात् पूर्वं महेशानि ! तीर्थं यत् परिकीर्त्तितम् ।
जलमाहृत्य कुम्भे च कृत्वा पुण्यं विधानवित् ॥
गन्धं पुष्पं ततो दत्त्वा पुनर्मन्त्रं जपेत्ततः ।
अमृतीकरणं कुर्य्यान्मुद्रां तत्र च दर्शयेत् ॥
षड़ङ्गं विन्यसेत्तत्र अवगुण्ठ्य ततोऽर्चयेत् ।
महोत्सवं ततः कृत्वा स्नानार्थं देवदक्षिणे ॥
स्नापयेत् स्नानशेषे तु देवबुद्ध्या क्षिपेत्ततो ।
उद्वर्त्तनं प्रतिदिनं कर्त्तव्यं त्रिदिनान्तरे ॥
दिनत्रयान्तरे वापि सर्वकाले विशेषतः ।
तिलोद्भवेन तैलेन सुगन्धेन मम प्रिये ! ॥
पलेन च पलार्द्धेन तदर्द्धेनापि यत्नतः ।

स्नेहैर्वा रजनीभिश्च तण्डुलोद्वर्त्तनादिभिः ॥
संस्थाप्य देवदेवेशं विल्वपत्रेण शङ्करि ! ।
संघृष्य स्नात्र' पत्रैर्वा अपामार्गस्य मूलकैः ॥
नलपुष्पस्य कूर्चैश्च न कूर्चैश्च महेश्वरि ! ।
कुशेन चामरेणाथ गोबालेन विशेषतः ॥
उशीरं कूर्चकं दत्त्वा सर्वपापैः प्रमुच्यते ।
दत्त्वा गोबालकं कूर्चं सर्वान् पापानपोहति ॥
दत्त्वा च चामरं कूर्चं श्रियमाप्नोत्यनुत्तमाम् ।
न वराहस्य रोमेण न वंशेन कदाचन ॥
गवयस्य तथाश्वस्य रोमन्तु परिवर्जयेत् ।
लिङ्गे वा प्रतिमायां वा शालग्रामे तथैव च ॥
न कूर्चयेत् प्रतिदिनं पञ्चाहे सप्तके तथा ।
मासान्ते वाथ पक्षान्ते कूर्चयेन्मम सुन्दरि ! ॥
अयने विषुवे चैव भौमवारे दिनक्षये ।
द्वादश्यां राहुग्रस्ते च तैलस्नानं न कारयेत् ॥
नैव तत् कूर्चयेद्देवि ! न वराङ्गे मुखे ततः ।
नासिकान्ते तथा गुह्ये लिङ्गे च पुलकेषु च ॥
वस्त्रेण मार्जयेद्देवि ! कार्पासेनाथ चन्दनैः ।
रक्तवस्त्रैर्भवेत् कुष्ठी पाण्डुव्याधिमवाप्नुयात् ॥
पट्टैश्च चोभमाप्नोति नीलीरक्तैः क्षयं व्रजेत् ।
परिधाप्य ततो वस्त्रं स्वर्गक्षयकरं तथा ॥
कटीवेष्टनकं दद्यात् नानारत्नादिभूषणम् ।
परिधानं पिधायैवं स्नानं यः कुरुते नरः ॥
पूजाकाले भोजने च स्नाने चैव विशेषतः ।
सोऽपि नाशमवाप्नोति धननाशं तथैव च ॥
मलयजेन गन्धेन गोपीचन्दनकेन वा ।

विल्वकाष्ठोद्भवेनाथ तुलसीकाष्ठकेन वा ॥
पद्मकेन तमालेन तथा रोचनयाथवा।
विधाय तिलकं श्रेष्ठमेषामेकतमेन च ॥
चतुःसमञ्चातिसमं द्विसमञ्च सुरेश्वरि!।
अत्रालिप्य ततो देहमयनेन विसर्जयेत् ॥
शीते रात्रौ पुनः स्नानेनानुलिप्य सुगन्धिभिः।
ललाटे तु विशेषेण वराङ्गे न कदाचन ॥
चतुःसमञ्च त्रिसमं द्विसमञ्च सुरेश्वरि!।
पादे पृष्ठे तथा नेत्रे न दद्यादनुलेपनम् ॥
चतुर्लग्ने हता लक्ष्मी मुखलग्ने हताः श्रियः।
दरिद्रः करलग्ने च पदलग्ने धनक्षयः ॥
लिङ्गस्य पुलकान्ते तु न दद्याच्चन्दनं प्रिये!।
पद्मपत्रे विल्वपत्रे करवीरदले तथा ॥
तत्र दद्याच्चन्दनञ्च लिङ्गे पुनश्च सम्भवे।
नेत्राणि नाञ्जयेद्देवि! कज्जलैश्च विशेषतः ॥
मालतीपत्रसम्भूतं तिलतैलेन आयसे।
तापयेत् पातयेद्देवि! कज्जलं तत् प्रकीर्त्तितम् ॥
नीराजनेन यः पूजां करोति वरवर्णिनि!।
अनन्तं प्राप्नुयात् सोऽपि इह लोके परत्र च ॥
अथ शुद्धिजलं यस्तु नैव कुर्यात् सुरार्चिते!।
सोऽपि मूढ़ो भवेद्रोगी क्षिप्रं वा नाशमाप्नुयात् ॥
लिङ्गे वा प्रतिमायां वा पूर्वमेव मम प्रिये!।
नीरैः सम्मार्जयेद्यन्त्रं कृत्वा चैव प्रदक्षिणम् ॥
संस्पृशेत् प्रतिमां भद्रे! माञ्च लिङ्गस्वरूपिणम्।
ओं नमो नारायणायेति ये वदन्ति मनीषिणः ॥
किं कार्य्यं बहुमात्रैर्वा न च विभ्रमकारकैः।

ओँ नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥
यजंस्तेनैव मन्त्रेण सूक्तेन पुरुषेण वा ।
द्वादशार्णरवीजेन कृष्णवीजेन पूजयेत् ॥
व्यस्तेन च समस्तेन अनुलोमविलोमके ।
तत्रार्कचन्द्रवह्नीनां मण्डलानि विचिन्तयेत् ॥
ततो विचिन्त्य हृदयं ॐकारं ज्योतीरूपिणम् ।
कर्णिकायां समासीनं ज्योतीरूपस्वरूपिणम् ॥
अष्टाक्षरं ततो मन्त्रं प्रवदन्ति यथाक्रमम् ।
केशवादिपुरं कृत्वा द्वादशाक्षरकं न्यसेत् ॥
चतुर्भुजं महासत्त्वं सूर्य्यकोटिसमप्रभम् ।
चिन्तयित्वा ततो योगं ज्योतीरूपं सनातनम् ॥
तत आवाहयेन्मन्त्रं क्रमशोधितमानसः ।
मीनरूपो वराहश्च नरसिंहोऽथवा पुनः ॥
आयातु देवो वरदो मम नारायणोऽग्रतः ।
सुमेरोश्च पादपीठे पद्मकल्पितमासनम् ॥
सर्वसत्त्वहितार्थाय तिष्ठस्व मधुसूदन ! ।
त्रैलोक्यपतीनां पतये नमो देवदेवाय ।
अर्घ्योऽयं हृषीकेशाय इत्यर्घ्यं विष्णवे नमः ॥ इत्यर्घ्यम् ।
स्वपाद्यं पादयोर्देव ! पद्मनाभ ! सनातन ! ।
विष्णो ! कमलपत्राक्ष ! गृहाण मधुसूदन ! ॥ पाद्यम् ।
मधुपर्कं महादेव ! ब्रह्माद्यैः कल्पितं तव ।
मया निवेदितं भक्त्या गृहाण पुरुषोत्तम ! ॥ मधुपर्कम् ।
मन्दाकिन्यास्तु ते वारि जलपानं हराशुभम् ।
गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम् ॥ आचमनीयम् ।
त्वमापः पृथिवी चैव ज्योतिस्त्वं वह्निरेव च ।
लोकसंवित्तिमात्रेण वारिणा स्नापयाम्यहम् ॥ स्नानम् ।

दरवस्त्रसमायुक्ते यज्ञवर्णविभूषिते ।
स्वर्णवर्णप्रभेदेन वाससी तव केशव ! ॥ इति वस्त्रम् ।
शरीरं ते लेपयामि चेष्टा स्वैव च केशव ! ।
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यताम् ॥ विलेपनम् ।
ऋग्वेदादिषु मन्त्रेण शोधितं पद्मयोनिना ।
सावित्रीग्रन्थसंयुक्तमुपवीतञ्च न चतम् ॥ इति यज्ञोपवीतम् ।
सूर्य्यश्चन्द्रश्च विद्युच्च त्वमेवाग्निस्तथैव च ।
त्वमेव ज्योतिषां देव ! दीपोऽयं प्रतिगृह्यताम् ॥ इति दीपः ।
अन्नं पञ्चविधञ्चैव रसैः षड्‌भिः समन्वितम् ।
मया निवेदितं भक्त्या नैवेद्यं तव केशव ! ॥ इति नैवेद्यम् ।

पूर्वे दले न्यसेद्देवं याम्ये सङ्कर्षणं न्यसेत् ।
प्रद्युम्नं पश्चिमे चैव तथैशान्ये त्रिविक्रमम् ॥
तथा च वासुदेवस्य गरुड़ं पुरतो न्यसेत् ।
तथा महागदाञ्चैव न्यसेद्देवस्य दक्षिणे ॥
ततः सवेदं धनुषी न्यसेद्देवस्य वामतः ।
दक्षिणे वसुधां देवीं वाङ्मयं तत्र विन्यसेत् ॥
श्रियो दक्षिणतः स्थाप्या पुष्टिं स्वोत्तरतो न्यसेत् ।
वनमाल्यञ्च पुरतः श्रीवत्सकौस्तुभौ ततः ॥
विन्यसेत् हृदयादीनि विन्यसेच्च चतुर्दिशम् ।
ततोऽपि देवदेवस्य कोणे नैव तु विन्यसेत् ॥
पीठेशानं पूजयेत्तु तच्छक्तीरपि बाह्यतः ।
ग्रहांश्च दिक्पतींश्चैव दद्यात् पुष्पबलित्रयम् ॥
एवं सम्पूज्य देवेशं मण्डलस्थं जनार्दनम् ।
लभेदभिमतान् कामान् नरो नास्य तु संशयः ॥
अनेनैव विधानेन मण्डलस्थं हयाननम् ।
पूजितं पश्यते यस्तु न विघ्नं विष्णुमव्ययम् ॥

सकृदप्यर्चितो येन विधिनानेन केशवः।
जन्ममृत्युज्वरातीतः स विष्णोः पदमाप्नुयात्॥
यः स्मरेत् सततं भक्त्या हयग्रीवमतन्द्रितः।
अन्वहं तस्य द्वे सन्ध्ये श्वेतद्वीपः प्रकल्पितः॥
ओंकारादिसमायुक्तं नमस्कारान्तदीपितम्।
स्वनाम सर्वतत्त्वानां मन्त्र इत्यभिधीयते॥
अनेनैव विधानेन मण्डपस्थं हयाननम्।
पूजितं यस्तु देवेशि! गन्धपुष्पं निवेदयेत्॥
एवमस्य प्रकुर्वीत यथोद्दिष्टक्रमेण तु।
मुद्रां ततो निबध्नीयाद् यथोक्तक्रमयोगतः॥
जपञ्चैव प्रकुर्वीत मूलमन्त्रेण मन्त्रवित्।
अष्टाविंशतिरष्टौ वा अष्टोत्तरशतं तथा॥
काम्येषु चाधिकं कुर्य्याल्लक्षकोट्यधिकं प्रिये!।
पद्मं शङ्खं श्रीवत्सञ्च गदां गरुड़मेव च॥
चक्रं खड्गञ्च शारङ्गं अष्टौ मुद्राः प्रकीर्त्तिताः।
अर्चनीयं न जानन्ति हरेर्मन्त्रान् यथोदितान्॥
हिरण्यगर्भेतिमन्त्रेण पूजयेत् परमेश्वरम्।
वक्ष्यमाणेन मन्त्रेण परमेशं समर्चयेत्॥

ओं नमोऽस्त्वनन्ताय विशुद्धचेतसे नमः स्वरूपाय सहस्रबाहवे।
सहस्ररश्मिप्रवराय वेधसे हयास्यरूपाय नमो नमस्ते॥
विशालदेहाय विशुद्धकर्म्मणे समस्तविश्वार्त्तिहराय शम्भवे।
नमोऽस्तु सूर्य्यानलतीव्रतेजसे हयास्यरूपाय नमो नमस्ते॥

अनादिदेवाधिप! शेखरप्रभो!
नमो विभो! भूतपते! महेश्वर!।
मरुत्पते! सर्वपते! जगत्पते!
रमापते! भुवनपते! सदा नमः॥

जलेश ! नारायण ! विश्वशङ्कर !
क्षितीश ! विश्वेश्वर ! विश्वलोचन ! ।
शशाङ्कसूर्य्यायतविश्वमूर्त्तये
हयास्यरूपाय नमो नमस्ते ॥
श्वेताय पुष्पकसरोवरप्रदाय
विद्याक्षियुक्तसहकारिचतुर्भुजाय ।
लौहित्यनि र्मतिकृते त्ववनासकर्त्रे
तस्मै तुरङ्गवदनाय नमो नमस्ते ॥
शुक्लाय दीप्तमणिपर्वतमन्दिराय
पीताम्बराम्बसजनेषु च मुक्तिदाय ।
भक्तेषु वाञ्छितधनं ददते समस्तम्
सोऽप्युद्धरेत् पितृगणञ्च हरे ! नमस्ते ॥
शुद्धाय सुप्ताय मणिरञ्जिताय प्रलम्बबाहुकमलासनाय ।
ततो घनाशनपुरघातकाय हयास्यरूपाय नमो नमस्ते ॥
जयति वरद ! पार्श्वे पुस्तकव्यस्तहस्तो
विधृतसितसरक्तो मोक्षदानां विभर्त्ति ।
शशधरशुभमूर्त्तिं र्भुक्तिमुक्तिप्रदायी
प्रणतसुरनरेभ्यो वाजिवातो मुरारिः ॥
दूड़ासुर ! हयग्रीव ! मुरारे ! मधुसूदन ! ।
मणिकूटकृतावास ! कमलाक्ष ! नमोऽस्तु ते ॥
जन्मकोटिकृतं पापं कल्पकोटिशतानि च ।
हयस्य दर्शनादेव सर्वं नश्यति तत्क्षणात् ॥
सप्तस्तोत्रं विशुद्धात्मा स्तुतिपाठं समाचरेत् ।
प्रदक्षिणत्रयं कुर्य्यात् पश्चाकारं नमेत्ततः ॥
दक्षिणादुत्तरं गत्वा देवस्य च महेश्वरि ! ।
कृत्वाञ्जलिं ततो भक्त्या भ्रमयित्वा नमेत्ततः ॥

प्रत्येकं प्रणमेद्देवि ! दण्डवत् प्रणिपातयेत् ।
यो नो नमेद्भ्रमित्वा च अपराधी भवेत्तदा ॥
अबद्धाञ्जलिलोकानां नमस्कारं करोति यः ।
मोहान्धकारनरके पच्यते नात्र संशयः ॥
पत्रान्तरे च प्रणमेन्मूर्द्ध्ना न च क्षितिं स्पृशेत् ।
शपन्ति देवतास्तस्य विफलं परिकीर्त्तितम् ॥
प्रणामो देवदेवेस्य यावत्यो मूर्त्तिकाः प्रिये ! ।
शरीरे वा महेशानि ! तस्य पुण्यफलं शृणु ॥
यावन्तो रेणवस्तस्य यावत्कालञ्च सन्ति वै ।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥
देव्युवाच । ब्रूहि मे देवदेवेश ! मम कान्त ! जगत्पते ! ।
मणिकूटे त्वयं विष्णुः स्थापितः केन वै पुरा ॥
भगवानुवाच । शृणु देवि ! महाभागे ! आगमं वेदसन्निभम् ।
कथयामि पुरावृत्तं प्रतिमायाश्च सम्भवम् ॥
प्रवृत्ते च महायज्ञे प्रासादे देवनिर्मिते ।
चिन्तयार्त्तो महीपालः प्रतिमार्थमहर्निशम् ॥
नवोदकेन देवेशं सर्वं त्वां लोकभावनम् ।
स्वर्गस्थित्यन्तकर्त्तारं पश्यामि पुरुषोत्तमम् ॥
चिन्तादुःखमयो राजा दिवारात्रं न शेरते ।
न भुङ्क्ते विविधान् भोगान् न स्नानं न प्रसाधनम् ॥
शैलशृङ्गस्थितावापि प्रशस्ता या महीतले ।
विष्णोः प्रतिमयोग्ये याः सर्वलक्षणलक्षिताः ॥
एतैरेव प्रमाणन्तु दयितं यत् सुरार्चनम् ।
तत् केन वा करिष्यामि चाज्ञापयतु मे प्रभुः ॥
कुशानास्तीर्थ्य सुप्वा च इन्द्रद्युम्नो महाबलः ।
हरिध्यानपरो भूत्वा सुष्वाप नियतेन्द्रियः ॥

सुप्तस्य तस्य नृपते र्वासुदेवो जगद्गुरुः ।
आत्मानं दर्शयामास सुप्तस्तस्मै च चक्रभृत् ॥
ददर्श स तु विष्णुं च देवदेवं जगद्गुरुम् ।
आत्मानं दर्शयामास तस्मै सुप्ताय चक्रभृत् ॥
शङ्खचक्रधरं देवं गदापद्मोग्रपाणिकम् ।
युगान्तादित्यवर्णाभं नीलवैदूर्य्यसन्निभम् ॥
सुवर्णपृष्ठमासीनं षोड़शार्द्धभुजं शुभम् ।
क्रतुनानेन दानेन धिया भक्त्या प्रशस्तया ॥
तुष्टोऽस्मि ते महीपाल ! कथं त्वमनुशोचसि ! ।
यदत्र प्रतिमां राजन् ! जगत्पूज्यां सनातनीम् ॥
स्थापयिष्यसि हे धीर ! तदुपायं ब्रवीमि ते ।
सागरस्य जलस्यान्ते नानाद्रुमविभूषिते ॥
वेलाभिर्हन्यमानस्तु न चासौ कल्पते द्रुमः ।
हस्ते च परशुं कृत्वा ऊर्म्मिमन्तं ततो व्रजेत् ॥
एकाकी विहरन् राजन् ! सत्यं पश्यसि पादपम् ।
इति क्वचित् समालोच्य च्छेदयन्नविशङ्कितः ॥
पश्चिमायतनं वृक्षं प्रातरद्भुतदर्शनम् ।
छित्वा परशुना वृक्षं तदा भूपाल ! चानय ॥
कुरु तत् प्रतिमां दिव्यां जहि चिन्तां विमोहिनीम् ।
एवमुक्त्वा महाबाहुः प्रयातोऽदर्शनं हरिः ॥
स चापि स्वप्नमालोच्य परं विस्मयमागतः ।
तां दिशं समुदीक्ष्यैव स्थितस्तद्गतमानसः ॥
व्याहरन् वैष्णवं मन्त्रसुक्तांश्चैव तदात्मकम् ।
प्रभातायां रजन्यान्तु सततानन्यमानसः ॥
स स्नात्वा सागरे रम्ये यथासम्यग्विधानतः ।
तं ददर्श महावृक्षं यथा तेजस्विनं द्रुमम् ॥

मोहान्तकं दुरारोहं पुण्यं विफलमेव च ।
महोच्छ्रायं महाकायं प्रसुप्तञ्च जलान्तिकं ॥
नीलरक्ताग्रवर्णाभं नामजातिविवर्जितम् ।
नरराजस्तथा विष्णोर्द्रुमं दृष्ट्वा पदाम्बितम् ॥
परशुना शातयामास निशातनतयैव हि ।
सप्तधा द्रुमराजः स निपपात महीतले ॥
ओड्रदेशे मूलभागं कल्पयामास वै विभुः ।
तदूर्द्ध्वखण्डं काश्मीरे कबन्धाकारमेव च ॥
आदित्यं तं विजानीयाद्रामेण स्थापितं पुरा ।
शोणादित्यं तदूर्द्ध्वाङ्गं शक्रेण स्थापितं प्रिये ! ॥
शिलारूपं महेशानि ! स्थापितं गुरुणा ततः ।
भागद्वयं कामरूपे भागैकं मलयागिरौ ॥
मणिकूटे ततोऽर्द्धञ्च स्थापितं वरुणेन हि ।
प्राच्यां नन्दीशमैशान्ये मत्स्याख्यो नाम माधवः ॥
शिलामयो दारुमयः कुवेरेणैव स्थापितः ।
महावराहनामा च योऽष्टादशभुजै र्युतः ॥
हयाख्यो मणिकूटे च माधवाख्यो व्यवस्थितः ।
सम्भवं कथितं देवि ! प्रापणं शृणु पार्वति ! ॥
इङ्गुदीफलविल्वानि वदरामलकानि च ।
खर्जूरं पनसञ्चैव तथा तालफलानि च ॥
दाड़िमं कदलीञ्चैव प्रयत्नेन नियोजयेत् ।
लकुचं मधुकं युक्तं तथा पूगफलानि च ॥
वीजपूरञ्च मधुरं कर्कन्धूञ्च निवेदयेत् ।
मूलकस्य च शाकञ्च गाजरस्य तथैव च ॥
यस्य फलं विशालञ्च तस्य शाकं प्ररोहकम् ।
वास्तूकस्य च शाकञ्च पालङ्गस्य मम प्रिये ! ॥

प्रदेयानि प्रियाण्यन्यानि च वा तिन्तिड़ीफलम् ।
कूष्माण्ड' पर्वतीयञ्च तथा चारणसम्भवम् ॥
कदलं वीजपूरञ्च रामकं पौण्ड्रकं तथा ।
अकालपनसञ्चैव तथान्यदपि वर्जयेत् ॥
ह्वीनानाञ्च प्रवक्ष्यामि उपयोगानि शङ्करि ! ।
एकचित्तं समाधाय प्रापणं शृणु शङ्करि ! ॥
सोमधान्यं वृहद्धान्यं रक्तशालिकमेव च ।
राजधान्यं षष्टिकञ्च देववल्लभकं तथा ॥
चणकं कोद्रवञ्चैव वर्जयेन्मम सुन्दरि ! ।
क्षारञ्च कृष्णक्षीरञ्च वर्णञ्च मार्त्तिकोद्भवम् ॥
लवणं प्राचीसम्भूतं तथोत्तरसमुद्भवम् ।
पशूनाञ्च प्रवक्ष्यामि वन्यानां ग्रामवासिनाम् ॥
यानि यान्युपयोग्यानि गव्यं देवि ! पयोऽमृतम् ।
मार्गं मात्स्यं तथाच्छागं शारभं शाशकन्तथा ॥
एतैस्तु प्रापणं दद्याद्विष्णोश्चैव प्रियावहम् ।
माहिषं वर्जयेन्मांसं क्षीरं दधि घृतन्ततः ॥
पक्षिणाञ्च प्रवक्ष्यामि ये प्रयोज्या मम प्रिये ! ।
हारितञ्च मयूरञ्च नारकं वर्त्तकन्तथा ॥
कपिलश्चैव चाषश्च काककुक्कुटकौ किरौ ।
वन्यकुक्कुटकञ्चैव शरारिश्च कपोतकः ॥
विल्वकः कुलिकश्चैव रक्तपुच्छश्च टिट्टिभः ।
कृष्णमत्स्याशनञ्चैव पक्षिणां तु विशिष्यते ॥
अभक्ष्यञ्चैव मांसञ्च यद्वा पञ्चनखस्य च ।
चित्रमत्स्यं रोहितञ्च मद्गुरं कविकं तथा ।
महाशल्कञ्च राजीवं दद्यात् सिंहतुण्डकं तथा ।
मत्स्यान्येतानि देयानि विभालीञ्च विवर्जयेत् ॥

जालपादांश्च शकुलान् मांसं वाराहकं तथा।
कौसुम्भशाकं पिण्याकं रक्तपादांश्च केशरान्॥
शोभाञ्जनं रक्तशेलुं बीमुकं तिन्दुकं तथा।
पूतिकं क[illegible]नकञ्चैव वर्जयेत् साधकोत्तमः॥
यथोक्तं साधयेन्मन्त्रं योगी ध्यानपरायणः।
अभक्ष्यं वर्जयेत् सर्वं देवताध्यानसाधने॥
हविष्याशी शुचि र्भूत्वा मन्त्रतन्त्रविशारदः।
अहर्निशं जपेद्विद्यां तल्लीनान्तरात्मना॥
स भवेत् कालिकापुत्रः सर्वत्र निर्भयो भवेत्।
रहस्यं परमं देवि! तव स्नेहात् प्रकाशितम्॥

इति योगिनीतन्त्रे सर्वतन्त्रोत्तमे द्वाविंशतिसाहस्रे द्वितीयभागे नवमः पटलः।

---

समाप्तोऽयं ग्रन्थः।

